यस्माद्देषां महाभाग्यवतां किंचिद्धनं च न ।
अतो निष्किंचनजनप्रियश्चासि त्वमच्युत ॥ २४ ॥

दरिद्रप्रियता देव कथं स्यादीदृशस्य ते ।
धनवंतश्च शांता ये तेऽप्याढ्या हि सतां मताः ॥ २५ ॥

धनवंतो मदांधा ये ते चाढ्या इति कीर्तिताः ।
ब्रह्मादिसुरसेव्यस्य तवाद्योऽर्थो न शोभते ॥ २६ ॥

द्वितीयस्तु दशास्याद्यैरसेव्यस्य तवोचितः ।
ईदृशाढ्यासेव्यता च गुण एवाभवत् तव[1] ॥ २७ ॥

किं च दोषाढ्य इत्याहुर्यस्य दोषो महान् भुवि ।
ईदृशाढ्यासेव्यता च निर्दोषस्य गुणस्तव ॥ २८ ॥

इतोऽपि नोऽस्मान्न भजंत्याढ्या इति वचस्तव ।
युक्तमेवाभवद्देव यच्छब्दः कामधुग् विदाम् ॥ २९ ॥

निरवद्यभवत्पादसंगिगंगांबुसंगतम् ।
क्षुद्रांबु च नृणां दोषविद्रावणकरं यथा[2] ॥ ३० ॥

---

यद्यद्भगवता पत्तमाधिपत्यं स्वसिद्धये ।
सर्वे प्रत्यर्यमामासुर्हरौ भूमिगते नृप ॥
—इति भागवते (10/50/55-57)

[1] 'मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः'—इति श्रुतिः ।

'आरुभिः दोषिभिः वन्यो वननीयो भजनीयो मैव तदुक्तप्रकारो न भवति परमात्मा' इति यावत् ।
—इति विष्णुतत्त्वनिर्णयटीकायाम् ।

'दूराद् दूरतरं यत्तु'—इति द्वादशस्तोत्रे ।

'नश्यतां दूरगं'—इत्यादि द्वादशस्तोत्रे ।

[2] गंगासंगेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा । —इति तत्त्वप्रकाशिकायाम् ।

तथा निर्दोषसुगुणपात्रीभूते महाप्रभौ ।
दोषशब्दाश्च सुगुणवाचकाः स्युरहो त्वयि ॥ ३१ ॥
इत्याद्यप्रियवाक्यं च प्रियार्थं कुर्वती रमा ।
निरवद्याऽभवद्देवी सेयं मंगलदेवता ॥ ३२ ॥
"वैदर्भ्येतदविज्ञाय त्वया(ऽ)दीर्घसमीक्षया ।
वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा[1]" ॥ ३३ ॥
इति कृष्णेन कथिता प्रत्याह किल रुक्मिणी ।
विज्ञान्येवार्भको यत्र विदर्भाख्यं हि तत्कुलम् ॥ ३४ ॥
अतो वैदर्भीति संबुध्यापि मामीश शंससि ।
एतदज्ञैर्दुष्टदृष्ट्या दृश्यमानमघं न हि ॥ ३५ ॥
मयाऽप्यापाततः कथ्यमानं मर्त्यानुकारिणा ।
नित्यशुद्धेन मनसा त्वमभिज्ञाय सर्वदा ॥ ३६ ॥
ध्यायंती [2]मद्गुणानेव वृतवत्यसि मां पतिम् ।
इति भावादेव देवा विज्ञायेत्युदितं त्वया ॥ ३७ ॥
अतस्तदपि वाक्यं मामभ्रमेत्येव [3]शंसति ।
यद्दीर्घकालजीवी त्वं दीर्घोऽसि विदुषां मते ॥ ३८ ॥
यतश्च दीर्घो भर्ता मे त्वमसीति समीक्षया ।
वृतो मया ततो दीर्घसमीक्षा चास्मि ते प्रिया ॥ ३९ ॥
यतश्च ब्रह्मरुद्राद्याः कल्पांतपरमायुषः ।
ततः सौमंगल्यभंगभीत्या त्यक्ता इमे मया ॥ ४० ॥

---

[1] अयमपि भागवतश्लोकः । ( X/75/20 )

[2] श्रुत्वा गुणान् भुवनसुंदर श्रृण्वतां ते.........
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ —इति भागवते (10/52/37)

[3] तदपि नियमेन यथार्थम् । —इति प्रमाणपद्धतौ ।

नदद्दीर्घसमीक्षा च भवाम्यच्युत ते प्रिया ।
तस्मदुभयथाऽपीश त्वदुक्तिर्घटते मयि[1] ॥ ४१ ॥
इत्थं त्रिभिः पदैरेतैर्मां प्रशस्य तव प्रियाम् ।
पदाभ्यामुत्तराभ्यां त्वं त्वां च स्तौषीति मे मतिः ॥ ४२ ॥
तत् ते पदत्रयं पूज्यं पूज्यमेतत् पदद्वयम् ।
तत् सहस्रपदं वेद्यं तथाऽनंतपदं वचः ॥ ४३ ॥
रूपं च सकलैः श्लाघ्यं न ते दोषास्पदं पदम् ।
एवं च दोषवाक्यार्थमपि भूषांचकार या ॥ ४४ ॥
निरवद्या कथं नाभूत् सेयं मंगलदेवता ।
गुणैर्ज्ञानानंदपूर्वैरिनोऽसि[2] त्वं चराचरात् ॥ ४५ ॥
हि शब्दश्च प्रसिद्धत्वमस्यार्थस्याह मध्यगः ।
अतो गुणैर्हीनता च गुण एवाभवत् तदा ॥ ४६ ॥
[3]'मय्यनंतगुणेऽनंत' इति यस्त्वं स्थलांतरे ।
उक्तवानसि तत् तेऽद्य कथं स्याद्गुणहीनता[4] ॥ ४७ ॥

---

[1] नित्यानंदचिदाकृतिं यदुपते त्वामेव मन्ये पतिं
यत्तत्तेऽच्युत नाम विश्वविदितं वीराग्रगानन्यगम् ।
तच्चिन्मात्रसमीक्षया यदि तदा सर्वेऽपि किं नाच्युताः
यद्येतच्चिरकालसंस्थतिकृतं पुत्रे तव स्यात् तदा ॥
—इति रुक्मिणीशविजये (14/44) ।

[2] हि + इनः = हीनः—इति पदविभागः ।

[3] मय्यनंतगुणेऽनंते गुणतोऽनंतविग्रहे ।
यदासीत्तत एवाद्यः स्वयंभूः समभूदजः ॥ —इति भागवते (6/7/48) ।
"गुणतः अनंते ।—
प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते ।

[4]त्रैगुण्यवर्जितत्वार्थम्योक्तावपि[4] गुणस्तव ।
यतस्ते बंधकगुणास्त्वं च बंधविवर्जितः ॥ ४८ ॥

---

तदानंत्यं तु गुणतस्ते चानंता हि संख्यया ॥
अतोऽनंतगुणो विष्णुर्गुणतोऽनंत एव च ॥

—इति तंत्रभागवते ।" — इति च तस्यार्थः भागवततात्पर्यनिर्णये ।

[4] तदत्रैके आहुरगुणं ब्रह्मेति । न तद् युक्तम् । श्रुतियुक्तिविरोधात् । तथा हि श्रुति. । 'सत्यं ज्ञानमनंतं ब्रह्म', 'विज्ञानमानंद ब्रह्म' । 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते । दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यंतरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः ।" 'एतावानस्य महिमा अतो ज्यायांश्च पूरुषः ।' 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।' 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।' 'सर्वनामा सर्वगंधः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ।', विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।' 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवंति ।' 'न ते विष्णो जायमानो न जातो देव महिम्नः परमंतमाप' इत्यादिका ।

युक्तिश्च । बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ताः । 'कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्' इति च भागवते । न च एको देवो सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निगुणश्च ।' इत्यादि (श्रुति) विरोधः । सत्वादिगुणाभावोक्तिस्तत्र अन्यथा एको देवः सर्वभूतेषु गूढः इत्यादीनामपि गुणत्वात् स्वोक्ति(क्त) विरोधः ।

—इत्यादि कर्मनिर्णये ।

[4] **त्रैगुण्यवर्जितमजं** विभुमाद्यमीशं वंदे भवघ्नममरासुरसिद्धवंद्यम् ।

—इति भारते (1/1/1) ।

योऽसौ निर्गुण इत्युक्तो वेदादिषु महेश्वरः ।
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते ॥

—इति पद्मपुराणे ।

सर्वथा गुणशून्यत्वं सौंदर्यादिगुणाकरे ।
साकारे च हरे न त्वय्यस्ति तेन मतं न तत् ॥ ४९ ॥

भिक्षुभिः श्लाघितत्वं च महानीशगुणस्तव ।
साशेन रचितं स्तोत्रं मिथ्यार्थं च भवेद् भुवि ॥ ५० ॥

निराशभिक्षुश्लाघ्यत्वाद्भवान् सत्यगुणोऽभवत् ।
मुधापदस्य शक्त्या च प्रकृतार्थः स्थिरोऽभवत् ॥ ५१ ॥

एवं श्रीदोषशब्दांश्च पोषयंती स्वभर्तरि ।
कथं वा भावयेद्दोषं मनसा च मनोरमे ॥ ५२ ॥

रमा स्वरमणे तेन भ्रमस्यावसरः कदा ।
दोषान्वेषणधीर्या न सा सासूया कदा वद ॥ ५३ ॥

गुणेषु दोषाविष्कारं यदसूयां विदुर्बुधाः ।
अदोषतामेव सदा ध्यायंती केन हेतुना ॥ ५४ ॥

क्रुद्ध्येत् स्वभर्तरि रमा तच्छुद्धैवाभवत् सदा ।
अतः परे शुद्धतमैवासीन्मंगलदेवता ॥ ५५ ॥

आपाततोऽप्रियं वाक्यं वदन् कृष्णो यतोऽततः ।
*"मयोदितं यदन्वर्थं सर्वं तत् सत्यमेव हि" ॥ ५६ ॥

इति प्रियां प्रति प्राह ततः सत्यव्रतत्वतः ।
निर्दोषगुणपूर्णत्वाच्चासीत् परममंगलः ॥ ५७ ॥

वादिराजकृते काव्ये श्राव्ये भ(भा)व्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूच्छ्रियः प्रियः ॥ ५८ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचितसरसभारतीविलासे चतुर्थो विलासः ॥

— o —

* साध्वेतत् श्रोतुकामैस्त्वं राजपुत्रि प्रलंभिता ।
मयोदितं यदन्वर्थं सर्वं तत् सत्यमेव हि ॥ —इति भागवते (10/75/53)

# पञ्चमो विलासः

असुरेभ्यः पराभूताः पुरा देवा सहेश्वराः[1] ।
जेतुकामाः पुनर्दैत्यान् भक्त्या परमया युताः ॥ १ ॥
उपासांचक्रिरे विष्णुं जिष्णुं त्रिभुवनेश्वरम् ।
[2]घ्राणाभिमान्यश्विनोश्च तथा वागभिमानिनः ॥ २ ॥

---

[1] देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तं हासुराः पाप्मना विविधुस्तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धोऽथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ता हासुरा पाप्मना विविधुस्तस्मात् तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धाऽथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद् विद्धमथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतत् विद्धमथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुरा पाप्मना विविधुस्तस्मात् तेनोभयं सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद् विद्धमथ ह य एवायं मुख्यप्राणस्तमुद्गीथसुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वसुर्यथाऽश्मानमाखणमृत्वा विध्वंसेतैवं स यथाऽश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणो नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवत्येतमु एवांततो वित्त्वोत्क्रामति व्याददात्येवांततः ।

—इति छांदोग्योपनिषत् (1/2) ।

[2] वायुपुत्रं च नासिक्यमग्निं वागात्मकं तथा ।
सोमं श्रोत्रात्मकं चैव सूर्यं चक्षुः स्वरूपिणम् ॥
रुद्रं मनःस्वरूपं च शेषं चाहंस्वरूपिणम् ।
चित्तात्मकं च गरुडं पापेन विविधुः सुरान् ॥

—इति छांदोग्यभाष्ये (प्रध्यानवचनम् )

अग्नेर्हृदि तथा चक्षुर्मानिनः सवितुर्हृदि ।
श्रोत्राभिमानिचंद्रस्य मनोमानिशिवस्य च ॥ ३ ॥

उच्चत्वादुदिति प्रोक्तो गीतोऽसौ गीतनामकः ।
तृतीयोऽतिशये यस्मात् तस्मादतिशयेन यः ॥ ४ ॥

श्रुतिभिः स्मृतिभिश्चैव गीतोऽसौ गीथनामकः ।
अथवोच्चैर्गीयमानः सर्वाधारो यतो हरिः ॥ ५ ॥

ततोऽप्युद्गीथनामाऽसौ भवेत् पाणिनिशिक्षया ।
योऽसौ गतिनिवृत्याख्येऽर्थे [1]ष्ठाधातुमचीक्लपत् ॥ ६ ॥

कप्रत्ययबलादाकारस्य लोपे कृते सति ।
ठकारस्य थकारे च स्थत्वं धातोर्भवेत् किल ॥ ७ ॥

निरुक्तत्वात् सकारस्य नाशे थत्वं च विंदति ।
श्वो न तिष्ठति यो वृक्षः सोऽश्वत्थः[2] कथमन्यथा ॥ ८ ॥

एवं च यस्मिन् सर्वं च तिष्ठत्येष थनामवान् ।
स्थिरत्वाद्वा थशब्देन प्रोच्यते पुरुषोत्तमः ॥ ९ ॥

इत्थमुद्गिथनाम्ना यः प्रोक्तः सर्वोत्तमो हरिः ।
तं वासुदेवं देवास्तु प्रतीकेष्वेषु पंचसु ॥ १० ॥

---

[1] ष्ठा गतिनिवृत्तौ—इति धातुपाठः ।

[2] 'श्वोऽप्येकप्रकारेण न तिष्ठति' इति अश्वत्थः ।

—इति गीताभाष्ये ।

'सुपि स्थ' इति कः । श्वसः सकारस्य तकारो धातु सकारस्य लोपश्च । निरुक्तत्वात् श्वस्थाता श्वत्थः । श्वत्थो न भवतीति अश्वत्थः ।

—इति प्रमेयदीपिकायाम् ।

'सुपि स्थ' इति कः । आतो लोप इटि चेत्याकारलोपः । तस्य तकारः ।

—इति श्रीराघवेंद्रतीर्थकृत गीताविवृतौ ।

सन्निधाया(ध्या)र्चयांचक्रुस्तदा दैत्याश्च पाप्मना ।
अदूषयन् प्रतीकांस्तान् पूजाविच्छेदकारिणः ॥ ११ ॥
अशुद्धप्रतिमां यस्मात् पूजानर्हां विदुर्बुधाः ।
शुना स्पृष्टम्वेष्टदेवप्रतिमा यन्न पूज्यते ॥ १२ ॥
असुरैः पाप्मना विद्धास्तदशुद्धाः सुरा इमे ।
पूजार्हा नाभवन् विष्णोः शुद्धाच्छुद्धतरस्य हि ॥ १३ ॥
अद्याप्यशुद्धतैतेषु प्रसिद्धा सर्वदेहिनाम् ।
अत एवाशुभे चापि शुभे च करणानि ते ॥ १४ ॥
प्रवर्तयंति सर्वत्र स्वाधीनानि पदे पदे ।
यतः सौरभदुर्गंधज्ञानं घ्राणेन जायते ॥ १५ ॥
सत्यानृते वदेद्वाचा दृश्यादृश्ये च चक्षुषा ।
पश्येच्छ्रोत्रेण च श्राव्यमश्राव्यं च श्रृणोति यत् ॥ १६ ॥
योग्यायोग्ये स्नानमद्यपाने यन्मनसा जनः ।
संकल्पयति तत् पापविद्धाः सिद्धाः सुरा इमे ॥ १७ ॥
[2]दोषानेतान् सदृष्टांतान् स्पष्टीचक्रे यतः श्रुतिः ।
ततः पूजानर्हतैषां सर्वेषां संमताऽभवत् ॥ १८ ॥
अनवद्या यस्य वधूः स्वयं चावृजिनः(वद्यवर्जितः) प्रभुः[3] ।
सोऽशुद्धप्रतिमामध्ये कथं संपूज्यते विभुः ॥ १९ ॥

---

[1] ........पापेन विविधुः सुरान् ।
असुरास्तैर्यतो विद्धास्तस्मात् ते दोषयोगिनः ।
—इति छांदोग्यभाष्यो(1/11)द्धृत प्रध्यानवचनम् ।

[2] अन्ये भागवतत्वेऽपि छिन्नधर्माः क्वचित् क्वचित् । (म भा.ता नि. (18/19)

[3] पवित्राणां पवित्रं यो मंगलानां च मंगलम् ।
—इति विष्णुसहस्रनामतौ ।

एषु स्थानेषु पूजायां विच्छिन्नायां पुनः सुराः ।
आलोच्य मुख्यप्राणाख्यप्रतिमायां जगद्गुरुम्[1] ॥ २० ॥
आराधयन् किल हरिं तत्र गत्वाऽसुराः स्वयम् ।
चूर्णीबभूवुः सर्वे च मुख्यप्राणोग्रतेजसा ॥ २१ ॥
यथाऽऽखणाश्मसंयोगे मृत्पिंडः स्वयमेव हि ।
चूर्णीभवेत् तथा सर्वे नाशमीयुर्दितेः सुताः ॥ २२ ॥
सर्वथा खननायोग्यो योऽश्मा दृढतरो भुवि ।
तमाहुराखणाश्मानं शब्दतत्त्वविदो जनाः ॥ २३ ॥
यदैक्यं नणयोः प्राहुस्तस्मादाहुः खनं खणम् ।
एवं च खनने योग्यः खण इत्युच्यते बुधैः ॥ २४ ॥
अखणस्तदयोग्योऽभूदासम्यक् खनने तु यः ।
अयोग्यस्तं दृढाश्मानमाखणं कोविदा विदुः[2] ॥ २५ ॥
इति छंदोगायकानां महोपनिषदेव हि ।
यद्वायोरितरे देवाः पूर्वदेवैर्वशीकृताः ॥ २६ ॥

---

[1] यस्माद् वायौ स्मृतो विष्णुर्वायोर्मुख्यतयाऽखिलात् ।
स्वस्य मुख्यतया तस्मात् परां तुष्टिं गमिष्यति ॥
अतो विचार्य सकलैर्देवैः प्राणे जनार्दनः ।
उपासितो दैत्यजयकारणात् पापवर्जिते ।
—इति छांदोग्यभाष्योद्धृत (प्रध्यानवचनम् )

[2] यदा विदध्वसुः प्राणं विध्वस्तास्ते तदाऽसुराः ।
अखन्याश्मानमेवाप्य लोष्टो विध्वंसते यथा ॥
प्रतिमां प्रेयसीं प्राप्य विष्णोः प्राणं तथाऽसुराः ।
—इति च छांदोग्यभाष्योदाहृत प्रध्यानवचनम् ।

तच्छुक्लता कथं तेषां दोषाविष्टधियां वद ।
अत्रमं देवमारभ्य क्रमेणैवोत्तरोत्तरान् ॥ २७ ॥

देवान् प्रदर्श्योपनिषत् पूर्वदेववशीकृतान् ।
अंतेऽन्तरायरहितं प्राणं चक्रे गुणाधिकम् ॥ २८ ॥

असुरावेशरहितवायोरेव हि शुक्लता[1] ।
उचितातो मुख्यवायुराखणाश्मसमः किल ॥ २९ ॥

यन्मुख्यवायुप्रतिमापूजाविच्छेदकासुरान् ।
चूर्णीकरोति तेनासाववविच्छिन्नार्हणोचिता ॥ ३० ॥

इति मत्वा तत्त्वविदो मध्वस्य स्वोपकारिणः ।
वायोस्तृतीयरूपस्य ह्यर्चां कुर्वते हरेः[2] ॥ ३१ ॥

वायुरेव यतो ब्रह्मा सोऽपि शुक्लोऽभवत् ततः ।
वाताद्भीतासुरा वायोः पत्नीं पर्यंकगां सदा ॥ ३२ ॥

यद्द्रष्टुमपि शक्ता नो साऽपि शुक्लाऽभवत् ततः ।
स्वस्पर्शा(र्शं)सहमानोऽपि पत्नीस्पर्शं सहेत कः ॥ ३३ ॥

अतोऽभूद्भारती[3] शुक्लतमा वेद(युक्ति)(तत्त्व)विदां मते ।
यतः सरस्वती देवी भारती पूर्वजन्मनि[4] ॥ ३४ ॥

अतस्तस्याश्च शुक्लत्वं तत्त्व(युक्त)मेवेति मे मतिः ।
अतः श्रौतं च यौक्तं च परेशुक्लमिदं त्रयम् ॥ ३५ ॥

---

[1] प्राणस्य नासुरावेशः आखणाश्मसमो हि सः ।

[2] 'वायौ मुख्यधिया' । —इति भागवते (11/11/44) ।

[3] अन्वेनमेव तद्धर्मे कृष्णैका संश्रिता सदा ।
—इति म. भा. ता. निर्णये (18/17) ।

[4] वागीश्वरीत्वं गतयैव कृष्णया । —इति म. भा. ता. निर्णये (32/134) ।

एवं च वायोरवमा देवाः शर्वपुरोगमाः[1] ।
वायोरपीशस्य हरेरासन् किंकरकिंकराः ॥ ३६ ॥

अतः श्रीहरिणैक्यं वा साम्यं वा कस्य संभवेत्[2] ।
तस्मादप्युत्तमत्वं यत् तदष्टमरसोपमम् ॥ ३७ ॥

किं च वायोः शुक्लतायां तस्य पुत्रास्तु ते त्रयः ।
हनुमद्भीममध्वाख्याः[3] मनोमालिन्यवर्जिताः ॥ ३८ ॥

दुष्टानिष्टप्रदास्ते च स्पष्टं स्युर्हि निदर्शनम् ।
शतयोजनविस्तीर्णं पुप्लुवे यः पयोनिधिम् ॥ ३९ ॥

सीताकृते शत्रुपुरीं योऽदहत् पुच्छवह्निना[4] ।
बभंज योंऽजनासूनुः कुंजरः कदळीमिव ॥ ४० ॥

---

[1] किंकराः शंकराद्याः । —इति हरिवायुस्तुतौ (32)

[2] नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥ — इति महाभारते ।
"न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ।"
"परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च ॥"
कचिदद्यतनोऽपि न पूर्णसदागणितेड्यगुणानुभवैकतनोः ।
—इत्यादि द्वादशस्तोत्रे ।
लक्ष्मीकांत समंततोऽपि(वि)कलयन् नैवेशितुस्ते समं
पश्याम्युत्तमवस्तु दूरतरतोऽपास्तं रसो योऽष्टमः ॥ —इति नखस्तुतौ ।

[3] प्रथमो हनूमान्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥
—इति म भा· ता· निर्णयोद्धृत भविष्यत्पर्ववचनम् (2/129) ।

[4] ददाह चाखिलां पुरीं स्वपुच्छगेन वह्निना ।
कृतिस्तु विश्वकर्मणोऽप्यदह्यतास्य तेजसा ॥
—इति महाभारततात्पर्यनिर्णये (7/45) ।

रावणस्य प्रियवनं रामविप्रियकारिणः ।
चमूसमूहस्य चाघ्नन् योऽमूमुचदमोः सुतः ॥ ४१ ॥
हस्तेनैकेन शस्तोरुकटकांगदधारिणा ।
सुवर्णवर्णकौपीनधारी हारी हरीश्वरः ॥ ४२ ॥
दत्वांऽगुलीयकं देव्यै प्रोक्त्वा तां प्रियभाषणम् ।
चूडामणिं[1] तया दत्तं गृहीत्वा करपल्लवे ॥ ४३ ॥
लीलयोल्लंघ्य जलधिं लालितः सुरपुंगवैः[2] ।
बालभानुसमः श्रीमान् हनूमान् रामकिंकरः ॥ ४४ ॥
स्वभक्तशरणौ दिव्यकिरणौ चरणौ हरेः[3] ।
धरणीचारिणौ मुक्तिकारिणौ भववैरिणौ ॥ ४५ ॥
रामस्य रणभीमस्य श्यामस्य स ददर्श ह ।
अद्रीनानीय[4] बहुशः क्षुद्रीकृत्य च सागरम् ॥ ४६ ॥

---

[1]चूडामण्यभिमनिनी देवता वायुरेव । 'प्राणश्चूडामणिस्तथा'। इति भागवततात्पर्यवचनात् (3/16/39) । स्वामिमन्यमानचूडामणिं स्वयं गृहीत्वा श्रीरामाय ददौ ।

[2] ( विलंघ्य चार्णवं पुनः ) स्वजातिभिः प्रपूजितः । (7/47) इति म. भा. ता. निर्णयवचनस्य भावः 'लालितः सुरपुंगवैः' इति प्रपंचितः । कप्यादीना सर्वेषां सुरात्मकत्वात । अंतरिक्षस्थसुरैः साक्षादपि लालितः इति वा । (7/49)

[2] चूडामणिं पवनजः पदयोर्निधाय ।
—इति म. भा. ता. निर्णये (7/49) ।

[4] न मूर्च्छतीति शिलोच्चये पवनवेग इत्यज्ञवाग्
यतो हनुमताऽऽहृता सुबहवो मरुत्सूनुना ।

मुद्रीकृत्यारिवदनमब्धौ [1] सेतुमथाकरोत् ।
सेनां स्वसेनामानीय दानवानामनीकिनीम् ॥ ४७ ॥
धनुर्विद्यापारगेण रामेण शरवर्षिणा ।
घातयित्वा स्वयं हत्वा पातयित्वा रिपोः शिरः ॥ ४८ ॥
सीतापतेः प्रियं कृत्वा नत्वा तत्पादपंकज(पल्लव)म् ।
श्रुत्वा तन्मुखतस्तत्त्वं स्तुत्वा रामायणीं कथाम् ॥ ४९ ॥
अद्याप्यास्ते[2] स रामेण सार्धं किंपुरुषे[3] किल ।
रथीभूय[4] रणे रामं कृती यः पर्यतोषयत् ॥ ५० ॥

---

गभीरतरवारिधिच्छदनचुंचवः पर्वता
जयंति कृतसेतवः क्षपणहेतवो रक्षसाम् ॥ —इति तीर्थप्रबंधे (4/17)

[1] पारावाराख्यरम्योपनिषदि विलसत्सेतवे सूत्रमात्रे
रामव्यासेन सेनानुगतिफलकृते दर्शिते रामभृत्यः ।
नानास्थानोपनीतैर्हनुमदभिनवश्रीमदानंदतीर्थ-
स्तेनेऽमानाद्रिमानैस्तमिममतिदृढं रम्यमात्मीयगम्यम् ॥

—इति तीर्थप्रबंधे (4/18) ।

[2] मरुत्सुतोऽथ बदरीमवाप्य नारायणस्यैव पदं सिषेवे ॥
समस्तशास्त्रोद्धरितं हरेर्वचो मुदा तदा श्रोत्रपुटेन संभरन् ।
वदंश्च तत्त्वं विबुधर्षभाणां तदा मुनीनां च सुखं ह्युवास ॥

[3] रामाज्ञया किंपुरुषेषु राज्यं चकार रूपेण तथाऽपरेण ।
रूपैस्तथान्यैश्च समस्तसद्मन्युवास विष्णोः सततं यथेष्टम् ॥

इत्थं स गायन् शतकोटिविस्तरं रामायणं भारतपंचरात्रम् ।
वेदांश्च सर्वान् सहितब्रह्मसूत्रान् व्याचक्षाणो नित्यसुखोद्धरोऽभूत् ॥

—इति महाभारततात्पर्यनिर्णये (9/119-122) ।

आनीय यो महाशैलं सेनां स्वां समजीवयत् ।
स्थानं च सत्यलोकाख्यं रामोऽस्मै प्रादिशत् किल ॥ ५१ ॥

जीवैरनंतैश्च कृतसुकृतानां फलम् सुखम् ।
सह भुंक्ते[1] किल श्रीशो ब्रह्मभूतहनूमता[2] ॥ ५२ ॥

वादिराजकृते श्राव्ये काव्ये भा(भ)व्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूत् मरुत्प्रियः ॥ ५३ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचित सरसभारतीविलासे पञ्चमो विलासः ॥

— ० —

---

स्वानंदहेतौ भजतां जनानां मग्नः सदा रामकथासुधायाम् ।
असाविदानीं च निषेवमाणो रामं पतिं किंपुरुषे किलास्ते ॥
—इति सुमध्वविजये (1/27) ।

[4] रथे स्थितेऽस्मिन् रजनीचरेशो न मे पतिर्भूमितले स्थितः स्यात् ।
इति स्म पुत्रः पवनस्य रामं स्कंधं समारोप्य ययौ च राक्षसम् ॥
—इति महाभारततात्पर्यनिर्णये (8/96) ।

[1] अतो हनूमान् पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादिकर्म ।
मोक्षं च लोकस्य सदैव कुर्वन् मुक्ताश्च मुक्तान् सुखयन् प्रवर्तताम् ॥
भोगाश्च ये यानि च कर्मजातान्यनाद्यनंतानि ममेह संति ।
मदाज्ञया तान्यखिलानि संति धातुः पदे तत् **सहभोग**नाम ॥
एतादृशं मे सहभोजनं ते मया प्रदत्तं हनुमन् सदैव ॥
—इति महाभारततात्पर्यनिर्णये (8/241/243)

[2] सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात् ।
—इति वाल्मीकिरामायणे (7/36/47)

# षष्ठो विलासः

एकाकी योऽविशद्रक्षःपुरीं राक्षसपूरिताम् ।
पुच्छस्वच्छाग्निना योऽसौ लंकालंकारभस्मकृत् ॥ १ ॥

यस्येंद्रजिन्महास्त्रेण कपीनां क्लेशकारिणा ।
न स्पर्शोऽभून्नापि मूर्च्छा[1] तं स्पृशेत् कः खलो वद ॥ २ ॥

वक्षःस्थले ताडितोऽपि रक्षसा रूक्षकर्मणा ।
न चचाल पदाद्योऽसौ हनूमान् मारुतात्मजः ॥ ३ ॥

कलिरूपधरं भीमनामा यो मर्दयिष्यति ।
दुर्वादिरूपदैत्यानां गर्वं खर्वीकरिष्यति ॥ ४ ॥

गुर्वग्रेसररूपो यश्चार्वपूर्वतरोक्तिमान् ।
तस्य राक्षसतो भीतिं प्रेक्षावान् वक्ष्यतीह कः ॥ ५ ॥

यस्तु हस्ततलेनैव[2] तथा पादतलेन च ।
मुष्टिना [3]चासुरमदच्छेत्ता तं कोऽसुरः स्पृशेत् ॥ ६ ॥

---

[1] अथेंद्रजिन्महाशरैर्वरास्त्रसंप्रयोजितैः ।
ततश्च वानरोत्तमं न चाशकद्विचालने ॥ इति म. भा. ता. निर्णये (7/31)

[2] समावृतस्तथायुधैः स ताडितश्च तैर्भृशम् ।
चकार तान् समस्तशस्तलप्रहारचूर्णितान् ॥ इति म. भा. ता. नि(7/21)

[3] अथो हनूमानुरगेंद्रभोगसमं स्वबाहुं भृशमुन्नमय्य ।
तताड वक्षस्यधिपं तु रक्षसां मुखैः स रक्तं प्रवमन् पपात ॥
स लब्धसंज्ञः प्रशशंस मारुतिं त्वया समो नास्ति पुमान् हि कश्चित् ॥
—इति महाभारततात्पर्यनिर्णये (8/78, 78) ।

यस्य दृष्टिश्च मुष्टिश्च गदा चारिविदारिणी ।
अनेककोटिसंख्यातानेकलः सकलान् खलान् ॥ ७ ॥

---

अथ खड्गं समादाय पुर आपततो रिपोः ।
हरिः प्रगृह्य केशेषु पातयित्वैनमाहवे ॥
शिरो ममर्द तरसा पवमानात्मजः **पदा** ॥ इति म. भा. ता नि. (8/51)

स **मुष्टि**मावृत्य च वज्रकल्पं जघान तेनैव स रावणं रुषा ।
प्रसार्य बाहूनखिलैर्मुखैर्वमन् स रक्तमुष्णं व्यसुवत् पपात ॥
—इति म. भा. ता. निर्णये (8/91) ।

**तलेन** वक्षस्यमिताडितो रुषा हनूमता मोहमवाप राक्षसः ।
—इति म. भा ता. निर्णये (8/121) ।

पक्वोरुभोज्यफलसन्नयनाय वृक्षेष्वारूढराजतनयानभिवीक्ष्य भीमः ।
पादप्रहारमुरुवृक्षतले विधाय साकं फलैर्विनिपतत्सु फलान्यभुंक्त ॥
—इति म. भा. ता. निर्णये (14/62) ।

युद्धे नियुद्धे उत धावन उत्प्लवे च पारिप्लवे त्वतिबलानखिलान्कुमारान् ।
एको जिगाय तरसा परमार्यकर्मा विष्णोः सुपूर्णसदनुग्रहतः सुनित्यात् ॥
—इति म. भा. ता. निर्णये (14/63) ।

क्षिप्त्वा सुदूरमुरुनागगणानथाष्टौ तद्वंशजान् स विनिहत्य पिपीलिकावत् ।
जघ्ने च सूत**मपहस्तत** एव भीमः सुष्वाप पूर्ववदनुत्थित एव तल्पात् ॥
—इति म. भा. ता. निर्णये (14/77) ।

तद्भीम**बाहुबल**ताडितमीशवाक्यात्सर्वैरजेयमपि भूमितले पपात ।
वक्त्रस्रवद्बहुलशोणितमाप मृत्युं प्रायात्तमोऽधमपि नित्यमथ क्रमेण ॥
—इति म. भा. ता. निर्णये (19/56) ।

आक्रम्य पादमपि **पादतलेन** तस्य **दोर्भ्यां** प्रगृह्य च परं विददार भीमः ।
मृत्वा स चोरुतम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्ति
चोग्रम् (19/91) ।

**चूर्णीचकार गदया सौगंधिकवने किल ।**
**बलवंतं भीमसेनं रक्षोविक्षोभकारिणम् ॥ ८ ॥**

---

भीमस्तु राजसमितिं प्रतिसंप्रयातां दृष्ट्वैव योजनशतोच्छ्र्यमाशु वृक्षम् ।
**आरुज्य** सर्वनृपतीनभितोऽप्यतिष्टत् दृष्ट्वा पलायनपराश्च बभूवुरेते ॥
(19/184)

वृक्षं त्वसौ प्रतिनिधाय च मद्रराजं **दोर्भ्यां** प्रगृह्य जवतो गगने निधाय ।
बंधुत्वतो भुवि शनैरदधात्स तस्य विज्ञाय वीर्यमगमन्निजराजधानीम् ॥
(19/138)

आयांतमीक्ष्य **तरुहस्त**मिमं समीरसूनुं सुयोधनमुखा निखिलाः सकर्णाः ।
भूरिश्रवाः शकुनिभूरिजयद्रथाश्च सर्वेऽपि दुद्रुवुरथो विविशुः पुरं स्वम् ।
(19/170)

विद्राव्य तान् **बाणसंघैः** समस्तान् जरासुतं **गदया** पोथयित्वा ।
बाहुभ्यां चैनं परिगृह्याशु विष्णोः पादोत्थायां प्राक्षिपद्देवनद्याम् । (20/26)

पृष्ठेऽस्य **जानु**मादाय कूर्मदेशं बभंज ह ।
मृतिकाले पुनर्देहं विददार यथा पुरा ॥
मर्मण्येव न हंतव्यो मयाऽयमिति मारुतिः ।
स्वपौरुषप्रकाशाय बभंजैनं न मर्मणि ॥
भज्यमाने शरीरेऽस्य ब्रह्मांडस्फोटसन्निभः ।
बभूव रावो येनैव त्रस्तमेतज्जगत्त्रयम् ॥ (21/153–155)

बलज्यैष्ठ्ये यदि वः संशयः स्यादुत्तिष्ठध्वं सर्व एवाद्य वीराः ।
मृद्गामि वः **पादतलेन** सर्वान् सहानुबंधान् यश्च मां योद्धकामः ॥
(21/331)

उद्धृत्य **बाहू** प्रययौ बाहुशाली वृकोदरः ।
आभ्यामेवाखिलान् शत्रून् शक्तो हंतुमहं त्विति ॥ (21/412)

विक्रम्य तान् **गदया**ऽसौ निहत्य विद्राव्य सर्वान् नळिनीं प्रविश्य ।
पीत्वाऽमृतांभश्च ततोंऽबुजानि दिव्यानि जग्राह कुरुप्रवीरः ॥ (22/309)

अग्रे निधाय मणिमंतमजेयमुग्रं शंभोर्वराद्विविधशस्त्रमहास्त्रवृष्ट्या ।
तान्सर्वराक्षसगणान्मणिमत्समेतान् भीमो जघान सपदि प्रवरैः **शरौघैः** ॥
(22/319)

इति ब्रुवाणो **मल्लं** तमभियातो वृकोदरः ।
अनयन्मृत्युलोकाय बलाद्यैरपि दुर्जयम् ॥ (23.19)

तत्रैनमासाद्य तु भीमसेनो विजित्य तं **बाहुयुद्धे** निहत्य ।
शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः ॥ (23/27)

सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महांतम् ।
उद्धृत्य **वृक्षं** तेन जघान सर्वानादाय कृष्णां पुनरागात्पुरं च ॥ (23/29)

निपात्य भूमौ **पादेन** संचूर्णितशिरास्तमः ।
जगाम किमु ते पुत्राः शक्या हंतुमिति स्म ह ॥ (24/9)

भीमस्य **नानदत** एव महास्वनेन ।
विण्मूत्रशोणितमथो मृतिमापुरेके ॥ (26/140)

स तैः पृषत्कैरवकीर्यमाणः शितान् **विपाठान्** युगपत् समाददे ।
जहार तैरेव शिरांसि तेषां हतेषु तेष्वेव परे प्रदुद्रुवुः ॥ (26/136)

विकर्णचित्रसेनाद्या एवं वीरतमाः सुताः ।
कर्णस्य पश्यतो **भीमबाणकृत्तशिरोधराः** ॥ (26/143)

निपेतुर्धृतराष्ट्रस्य रथेभ्यः पृथिवीतले ।
त्रयोविंशतिरेवात्र कर्णसाहाय्यकांक्षिणः ॥ (26/144)

एकविंशतिवारं च व्यश्वसूतरथध्वजः ।
गाढमभ्यर्दितस्तीक्ष्णैः **शरै**र्भीमेन संयुगे ॥ (26/145)

प्राणसंशयमापन्नः सर्वलोकस्य पश्यतः ।
रणं त्यक्त्वा प्रदुद्राव रुदन् दुःखात् पुनः पुनः ॥ (26/146)

स कर्णपुरतो भीमो दुष्कर्णं कर्णमेव च ।
दुर्योधनस्यावरजौ निष्पिपेष **पदा** क्षणात् ॥
रथाश्वध्वजसूतैश्च सह तौ न व्यपश्यताम् ॥ (26/210)

**न [1]द्रष्टुमपि [2]शक्तोऽस्ति स्प्रष्टुं शक्ष्यति कोऽसुरः ।**
**प्रमाणगणबाणौघैरासेतोराहिमाचलात् ॥ ९ ॥**

---

निरायुधोऽहमिति मां त्वमात्थ परुषं वचः ।
निरायुधः पदैवाहं त्वां हंतुमशकं तदा ।
इति कर्णस्य तौ भीमः संज्ञया ज्ञापयन् भुवि ॥
**पदा** पिपेष कालिंगं मुष्टिनैव जघान ह ।
**मुष्टिना** त्वद्वधायाहं समर्थ इति किं वदे ॥
तस्मान्मया रक्षितस्त्वमिति ज्ञापयितुं प्रभुः ।
साश्वसूतध्वजरथः कालिंगो **मुष्टिचूर्णितः** ॥ (26 219–224)
पुनः **शरैरेव** परस्परं तावयुध्यतां चित्रमलं च सुष्ठु ।
तदा तु भीमस्य **शरैर्भृ**शार्तो द्रौणिः पपाताशु दृढं विचेतनः ॥ (27/16)
इति ब्रुवन् नृत्यमानोऽरिमध्ये आस्फोटयंच्छत्रुगणानजोहवीत् ।
शशाक च द्रष्टुममुं न कश्चिद्वैकर्तनद्रौणिसुयोधनादिषु ॥ (27/156)
भयाच्च कर्णस्य पपात कार्मुकं निमीलयामास तदाऽक्षिणी च ।
संबोधितो मद्रराजेन युद्धे स्थितः कथंचित् स तु पार्थभागः । (27/157)
—इत्यादि महाभारततात्पर्यनिर्णये ।

अगदस्याप्यधनुषो विरथस्य विवर्मणः ।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ (5/51/44)
नृत्यन्निव गदापाणिर्युगांतं दर्शयिष्यति ॥
—इति महाभारते (5/51/32) ।

[1] नहीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ।
क्रुद्धस्य भीमस्य प्रेक्षितुं मुखमाहवे ॥
इदं संनिहितं तात समग्रं पार्थिवं बलम् ॥
—इति महाभारते (5/124/47) ।

व्यद्रावयत् खलान् क्षुद्रसिद्धांतस्य प्रवर्तकान् ।
तस्य मध्वमुनेः शुद्धां बुद्धिं को वाऽसुरो विशेत् ॥ १० ॥

[1]मानुषान्नोपभोगेऽपि सूनूनां यस्य धीमताम् ।
हीनता मानसे नास्ति तस्य वायोः कुतोऽस्ति सा ॥ ११ ॥

बुद्धिस्तस्य परे तत्त्वे शुद्धाऽभूत् तद्धनूमतः ।
शुद्धस्य भीमसेनस्य मध्वस्य च महात्मनः ॥ १२ ॥

भीमो जितारिस्तोमो यः सोमान्वयसमुद्भवः ।
नामैव यस्य भयदं धीमांच्छ्रीमान् स भण्यते ॥ १३ ॥

[2]यतो रामाकृतौ भक्तमपि त्यक्त्वा रवेः सुतम् ।
भीमार्थं पार्थमेवांगीचक्रे चक्रधरः प्रभुः ॥ १४ ॥

---

[1] सर्वे गुणा आवृता मानुषत्वे युगानुसारात् मूलरूपानुसारात् ।
क्रमात्सुराणां भागतो व्यक्तरूपा आदानतो व्यक्तिमायांत्युरूणम् ॥
नैवाव्यक्तिः काचिदस्तीह विष्णोः प्रादुर्भावेऽप्यतिसुव्यक्तशक्तेः ।
**इच्छाव्यक्तिः** प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन ॥
—इति महाभारततात्पर्यनिर्णये (22/296, 297) ।

देवानां हि नृजातानामल्पं व्यक्तं भवेद्बलम् ।
**इच्छया व्यक्ततां** याति वायोरन्येषु तच्च न ।
नित्यव्यक्ता गुणा विष्णोरिति शास्त्रस्य निर्णयः ॥
एवमन्येऽपि हि गुणा मानुषादिषु जन्मसु ।
देवानां मानुषादौ तु शक्येऽप्यवयक्तताकृतेः ।
धर्मवृद्धिर्भवेत्तेषां प्रीतो भवति केशवः ॥
—इति म भा ता॰नि॰ (22/366-9) ।

[2] देहेऽपि यत्र पवनस्तत्र हरिर्यतोऽसौ तत्रैव वायुरिति वेदवचः प्रसिद्धम् ।
'कस्मिन् वहत्त्वि'ति तथैव हि सोऽवतारेतस्मात्स मारुतिकृते रविजं ररक्ष ॥
एवं स कृष्णतनुरर्जुनमप्यरक्षद्भीमार्थमेव तदरिं रविजं निहत्य ।

[1]भीमोऽपि कृष्णप्रीत्यर्थं पार्थं त्रैलोक्यविश्रुतम् ।
कर्नुं मार्ताण्डतनयं प्राङ् मित्रमपि तत्यजे ॥ १५ ॥
किं च [2]ज्येष्ठमपि [3]ज्येष्ठापतिं कल्यात्मकं नृपम् ।
कृष्णदूषकमाबाल्याद् बबाधे विबुधप्रियः ॥ १६ ॥
[4]रामाद्गदाभ्यासकाले यः कृष्णं वृष्णिवल्लभम् ।
क्षणे क्षणे प्रणमति मनुते च हरिं गुरुम् ॥ १७ ॥

---

पूर्वं हि मारुतिमवाप रवेः सुतोऽयं
तेनास्य वालिनमहन् रघुपः प्रतीपम् ॥
एवं सुराश्च पवनस्य वशे यतोऽतः
सुग्रीवमत्र तु परत्र च शक्रसूनुम् ।
सर्वे श्रिता हनुमतस्तदनुग्रहाय
तत्रागमद्रघुपतिः सह लक्ष्मणेन ॥ —इति म. भा ता. नि 5/46-48) ।

[1] भीमार्थं केशवोऽन्ये च देवाः फल्गुनपक्षिणः ।
आसन् यथैव रामाद्याः संग्रहेण हनूमतः ॥
सुराः सुग्रीवपक्षस्थाः पूर्वमासंस्तथैव हि ॥
तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः ।
आप पूर्वानुतापेन तेन भीमस्तथाऽकरोत् ॥
— इति म. भा. ता निर्णये (18/54-56) ।

[2] सुयोधनश्चतुर्थेऽह्नि जातस्तस्यापरेद्युर्भीमिसेनः सुधीरः ।
—इति म. भा. ता. निर्णये (12/106) ।

[3] ज्येष्ठापतिम् अलक्ष्म्याः पतिम्—कलिं सुयोधनमित्यर्थः । 'उद्वाह्य काशितनयां गिरिजाधिविष्टां साक्षान्नरेषु जनितां प्रथमामलक्ष्मीम् ।'
—इति महाभारततात्पर्यनिर्णये (19/201) ।

[4] प्रत्युद्यमो भगवतोऽपि भवेद्गदायाः
शिक्षा यदा भगवता क्रियते न चेमम् ।

कृष्णसंकल्पसिद्ध्यर्थं कृष्णायै द्रोहकारिणः ।
न जघानाक्षकितवान् मतं जानन् रमापतेः ॥ १८ ॥

इदं तु महदाश्चर्यं सभामध्ये वृकोदरः ।
स्वभार्यायै द्रुह्यतोऽपि सेहे[1] स्नेहेन केशवे ॥ १९ ॥

ससैन्यस्य कुरुक्षेत्रे वधो भूभारहारिणः ।
यतो मतो [2]हरेस्तस्मादिदानीमभवत् क्षमा ॥ २० ॥

---

कुर्यामिति स्म भगवत्समनुज्ञयैव
रामादशिक्षदुरुगायपुरः स भीमः ॥

—इति म. भा. ता. निर्णये (14/103) ।

यस्याच्युतावेशविशेषकालं ज्ञात्वा भीमोऽप्यस्य नोदेति युद्धे ।
क्रीडायुद्धे बहुशो रौहिणेये व्यक्तिं विष्णोर्भीमसेनो विदित्वा ॥
तत्कालिकीं क्रीडमानोऽपि तेन नैवोद्यमं कुरुते विष्णुभक्त्या ॥
तदा जयी प्रभवत्येष रामो नातिव्यक्तस्तत्र यदा जनार्दनः ।
तदा भीमो विजयी स्यात्सदैव विष्णोः केशावेशवान् यत्स रामः ॥

—इति म. भा. ता. निर्णये (22/248-250) ।

[1] माननार्थं गुरूणां तु न भीमस्तान् जघान ह ।
न चात्यवर्तत ज्येष्ठं धर्मात्मानं युधिष्ठिरम् ।
तेषां पापाभिवृद्ध्यर्थं ज्येष्ठवृत्तिं च दर्शयन् ॥

—इति म. भा. ता. निर्णये (21/352) ।

पुनश्च पापवृद्ध्यर्थं तदैव नो जघान तम् ॥

—इति म. भा. ता. निर्णये (21/351) ।

[2] भीमः कर्णरथं प्राप्तः शक्तिं नादातुमैच्छत ।
अभिप्रायं केशवस्य जानन् हैडिंबमृत्यवे ॥

—इति च म. भा. ता. निर्णये (26/165) ।

ईदृश्यामप्यवस्थायां योऽप्रियं नाकरोद्धरौ ।
स तस्मिन् शुद्धधीः सिद्धो भीमः सर्वत्र सर्वदा ॥ २१ ॥

हरिश्च भीमसेनस्य दृष्ट्वा भक्तिमचंचलाम् ।
अकार्षीत् तस्य महिषीं द्रौपदीमक्षयांबराम् ॥ २२ ॥

अन्योन्यस्निग्धयोरेवं शुद्धयोः कृष्णभीमयोः ।
कोऽन्यथा कुरुते चित्तं देवो वा दानवोऽपि वा ॥ २३ ॥

कृष्णभक्तस्य पार्थस्य कीर्त्यर्थं द्रुपदालये ।
शक्तोऽपि तद्धनुर्धर्तुं नोदतिष्ठत् (त्तिष्ठद्धि) वृकोदरः[1] ॥ २४ ॥

अतः कृष्णमताभिज्ञो भीम एव न संशयः[2] ।
भीमस्य हितकारी च कृष्ण एव न संशयः ॥ २५ ॥

पश्य श्रीभीमसेनस्य कृष्णे भक्तिमचंचलाम् ।
नावधीत् वैष्णवं योऽसौ नाशेषयदवैष्णवम्[3] ॥ २६ ॥

[4]विष्णुपादोदकं मत्वा यः स्नातुं शंकते कुधीः ।
अमज्जयज्जरासंधं बलात् तं जाह्नवीजले ॥ २७ ॥

---

[1] तस्मिंश्च तेन विहते प्रतिसन्निवृत्ते भीमार्जुनौ द्विजसदस्युपसन्निविष्टौ ।
उत्तस्थतुः········ ॥ ····तत्रार्जुनः पवनजात् प्रियतोऽप्यनुज्ञामादाय···· ॥
—इति म. भा. ता. निर्णये (19/129–131) ।

[2] "स ह्येक एनमवगच्छति सम्यगीशम् ।" (5/45)
"स चैव जानाति हि देवगुह्यम् ॥" (8/143)—इति म. भा. ता. नि. ।

[3] सख्यं नावैष्णवैश्चक्रे प्रतीपं वैष्णवेन च ।
—इति म. भा. ता. निर्णये (18/9) ।

[4] विद्राव्य तान् बाणसंघैस्समस्तान् जरासुतं गदया पोथयित्वा ।
बाहुभ्यां चैनं परिगृह्याशु विष्णोः पादोत्थायां प्राक्षिपद्देवनद्याम् ॥
—इति म. भा. ता. निर्णये (20/26)

मणिमंतं महाभ्रांतं हरौ द्वेषकरं खलम् ।
वाचा विजित्य गदया नीचं पश्चाज्जघान यः ॥ २८ ॥

द्रष्टुकामान् कृष्णपादौ यष्टुकामं[1] शिवाध्वरे ।
तुष्टये वैष्णवानां यो भ्रष्टं मुष्टिभिरर्दयत् ॥ २९ ॥

अजरं यो जरासंधं जघानाच्युतदूषकम् ।
दुर्योधनस्य निधनं यश्चक्रे कृष्णवैरिणम् ॥ ३० ॥

[1]भूभारहरणोद्युक्तश्रीभर्तुः प्रीतये चमूम् ।
मृधे सुगदया योऽसावजीघनदनेकशः ॥ ३१ ॥

क्रतुना राजसूयेन क्रतोर्भोक्तारमच्युतम् ।
अतर्पयद्धि यो भीमः स तस्य प्रियकृन्न किम्
तस्माद्भीमः परे तत्त्वे शुद्धोऽभूद् बुद्धिशुद्धिमान् । ॥ ३२ ॥

वादिराजकृते श्राव्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभून्मरुत्प्रियः ॥ ३३ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचितसरसभारतीविलासे षष्ठो विलासः ॥

— o —

---

[1] यद्बांधवान्नः पिशिताशिधर्मतो रौद्रे मखे कल्पयितुं पशुत्वे ।
इच्छस्यरे वेदपथं विहाय त्वं त्वां बलाच्छास्तुमिहागता वयम् ॥
—इति जरासंधं प्रति श्रीकृष्णवचनम् (म. भा. ता. नि. 21/132) ।

[2] ब्रह्मेशचण्डमुनिदत्तवरैरजेयो मृत्यूज्झितश्च विजयी जगतः । (14/10)

[3] भूभारहारिणो विष्णोः प्रधानांगं हि मारुतिः ।
मागधादिवधादेव दुर्योधनवधादपि ॥ —इति ता. नी. (2/16) ।
एवमक्षोहिणी षट्कं भीमेन निहतं रणे ।
—इति म. भा. ता. निर्णये (28/43) ।

[4] अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः ।—इति भारते (5/77/18)
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ —इति गीतासु (1/10) ।

## सप्तमो विलासः

मध्वश्च ब्रह्मसूत्राणां शुद्धभाष्यचिकीर्षया ।
बुद्धिभ्रमकरं विद्वद्दूष्यं दुर्भाष्यकाननम् ॥ १ ॥

वनानल इवानेकप्रमाणशिखयोग्रया ।
दग्ध्वा दुर्दर्शनध्वांतमुद्यन्नर्क इवौजसा ॥ २ ॥

विद्राव्य वादयुद्धेन विद्वन्मन्यान् विजित्य च ।
चक्रे भाष्यं जगत्तोष्यं पोष्यं कोविदसंसदि[1] ॥ ३ ॥

शि(क्र)ष्यादेः सुखदं शिष्यहृष्यच्चित्तार्तिनाशनम् ।
तोष्यं सद्युक्तिरत्नौघैर्घोष्यं च भुवनत्रये ॥ ४ ॥

इत्थं व्यासं गुणावासं तोषयित्वा सतां वशम् ।
वेदांतमानिनीं लक्ष्मीं मोदयिष्यंस्ततः परम् ॥ ५ ॥

दशोपनिषदां भाष्याण्यचीक्लपदुदारधीः ।
शास्त्रभारं समानीय व्यासदत्तमनुत्तमम् ॥ ६ ॥

बोधयामास सुजनान् बाधयामास दुर्जनान्
वेदयामास तत्त्वानि साधयामास सद्यशः ॥ ७ ॥

भारतीपतिपुत्रोऽसौ भारतार्थविनिर्णयम् ।
विरचय्याहिशय्यस्य व्यासस्यातोषयन्मनः ॥ ८ ॥

स हि भारतवंशस्य मूलभूतो जगद्गुरुः ।
अतस्तत्प्रीतये मध्वो भारतं धीरतं व्यधात् ॥ ९ ॥

अद्यापि बदरीशैले बदरीषंडमंडिते ।
मध्ये मुनीनामध्यास्ते विद्वान् व्यासस्य सन्निधौ ॥ १० ॥

---

[1] 'ज्ञानभक्तिदमनंतसौख्यदम् ।' —इत्यादि सुमध्वविजये (9/8–12) ।

किं च मध्वात्मना सूत्रभाष्यकारी परे हरौ ।
विरुद्धसर्वसिद्धांतानद्धा विध्वंस्य युक्तिभिः ॥ ११ ॥
हरिं परितरं मुक्तिकरं स्वापितरं प्रभुम् ।
त्रिलोक्यां यः स्थिरीचक्रे स च वेदोदितो गुरुः ॥ १२ ॥
यो मध्वो मातरिश्वेति विस्पष्टं श्रूयते श्रुतौ[1] ।
ईशानासोऽस्य कृपयाऽक्रियंत किल सूरयः ॥ १३ ॥
योषणोऽजनयंतामुं दशप्रमतिनामकम् ।
सप्तस्वसृरुज्जहार विद्वान् मध्वो दशे हरेः ॥ १४ ॥
इत्यादिवेदवाक्येषु श्रू( स्तू )यते यः स्थले स्थले ।
अतस्तदुदितं मानं वेदमानवतां सताम् ॥ १५ ॥
मरुदात्मकताऽप्यस्य तत एव स्थिराऽभवत् ।
एवं गृणंती श्रीमध्वं श्रुतिरेषा गुरोर्मम ॥ १६ ॥
बुद्धिशुद्धिमभिप्रैति तस्माद्वायोस्तु शुक्लता ।
ऋग्वेदसंहितावाक्यादपि सिद्धा महात्मनः[2] ॥ १७ ॥
मरुद्रूपे गुरौ प्रेम्णा हरिर्द्वारवतीपुरात्[3] ।
नावा सेवातुरं द्रष्टुकामो दामोदरप्रभुः ॥ १८ ॥

---

[1] 'मध्वाख्यं मंत्रसिद्धं ।' —इति हरिवायुस्तुतौ ।

[2] यदीमनु प्रदिवो मध्व आधवे गुहासंतं मातरिश्वा मथायति । (1/141/3)
निर्यदीं बुध्नान्महिषस्य वर्पसः ईशानासः शवसा क्रंत सूरयः ॥
तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयंत योषणः । (1/141/2)
सप्तस्वसृररूषिर्वावशानो **विद्वान् मध्व** उज्जभारा दृशे कम् ॥
—इति ऋग्वेदसंहितायाम् (10/5/5) ।

[3] द्वारावतीं सकलभाग्यवतीमुपेक्ष्य गोपालबाललललनाकरपूजनं च ।
वार्धिं वधूगृहमतीत्य स मध्वनाथो यत्रास्ति तद्रजतपीठपूरं गरीयः ।
—इति तीर्थप्रबंधे (1/9) ।

आयादायासहृत् स्वानामिति सर्वस्य संमतम् ।
एवं चाच्छिन्नभक्तत्वं तत्त्वं प्रत्यक्षमानतः ॥ १९ ॥
सिद्धमासीद् बुद्धिशुद्धिरपि सिद्धा गुरोर्मम ।
हरिश्च तत्पूज्यपादोऽभवत् सर्वसुराग्रणीः ॥ २० ॥
उररीकुरुते चार्वाकोऽपि प्रत्यक्षमानताम् ।
तत्प्रत्यक्षं सर्वबुधैरक्ष्यं मानं न संशयः ॥ २१ ॥
न चेचार्वाकतोऽप्यर्वाचीनः स्याद्विदुषां बहिः ।
कृष्णप्रतिष्ठां यश्चक्रे चक्रे शिष्यान्नवान्नव ॥ २२ ॥
विस्तारयामास भूमौ तत्त्वं तत्त्वविदग्रणीः ।
हृद्गमध्वस्य कृपया तच्छिष्याणां परंपरा ॥ २३ ॥
पराभाव्य परान् सर्वान् दूरीकृत्य दुरागमान् ।
अद्यापि शास्ति सत्तत्त्वं मध्वोऽसौ जयतेतराम् ॥ २४ ॥
शरच्छते व्यतीते तु देवानामाज्ञया प्रभोः ।
एकतां मूलरूपेण लोके स्वीये गमिष्यति ॥ २५ ॥
स्वानुजं [1]विष्णुतीर्थं च तपसा धूतकल्मषम् ।
प्रेषयिष्यति सत्तत्त्वकथनाय कलौ किल ॥ २६ ॥

---

[1] तिरोहिते सन्मतेऽस्मिन् **विष्णुतीर्थो** गुहाचलात् ।
आगत्योद्धृत्य तत्रत्य ग्रंथान् स प्रथयिष्यति ॥
यस्मात्सर्वहृदिस्थसंशयचयं ज्ञात्वा यतीशो मरुत्
सद्धर्मांश्च तिलांशतोऽप्युपदिशेत्याज्ञानिबंधं व्यधात् ।
तस्मात् **सेतुतिले**ति लोकगदितं क्षेत्रं सुतीर्थात्मकं
स्कंदाद्रेर्बिलतोऽवतीर्णयतिना संशोध्यते कालतः ॥
—इति श्रीहृषीकेशतीर्थकृत संप्रदायपद्धतौ (21, 22) ।

स्वच्छंदमृत्युता व्यासकृपयाऽस्त्युभयोस्तयोः ।
एवं हरिकृपापात्रीभूतः सोऽयं गुरुर्मम ॥ २७ ॥
मरुदेव न संदेहः परे तत्त्वे हरौ सदा ।
शुद्धबुद्धित्वतः शुक्रोऽप्यासीदासीकृतामरः ॥ २८ ॥
अतो मध्वमुनेरध्वा शुद्धोऽभूच्च विचारणे ।
सिद्धोऽन्यवादिनामध्वा कदध्वाऽभून्न संशयः ॥ २९ ॥
यस्मादास्माकगुरुणा सूत्रे सूत्रे हरेर्गुणान्
प्रस्तूय सर्वोत्तमता हरेरेव प्रसाधिता[1] ॥ ३० ॥
[2]'परोऽसि मात्रया' तन्वा वृधान न तु तेजसा ।
'न ते महित्वं' केऽप्यत्रान्वश्नुवंति महाप्रभो ॥ ३१ ॥
[3]'विष्णोर्नु कं' '[4]न ते विष्णो' 'विष्णुः परम' इत्यपि ।[5]
श्रुतीरुक्त्वा तथा ब्रह्मरुद्राद्युत्कृष्टचेतनः[6] ॥ ३२ ॥
[7]शंभोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः ।
[8]'ब्रह्मेशाद्या' न तेषां क इत्याद्यगणितस्मृतीः ॥ ३३ ॥

---

[1] अर्थोऽयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपंचरात्रैः ।
अन्यैश्च शास्त्रवचनैः सहतत्त्वसूत्रैर्निर्णीयते सहृदयं हरिणा सदैव ॥
—इति म भा. ता. निर्णये (I/22) ।

[2] परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवंति । ऋग्वेदे (7/99/1)

[3] विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ऋग्वेदे (1/154/1)

[4] "न ते विष्णो जायमानो न जातो देव महिम्नः परतमंमाप ।"
—इति ऋग्वेदे (7/99/2)

[5] 'अग्निर्वै देवानामवमो **विष्णुः परमः**'—एतरेयारण्यके ।

[6] यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । (गीता 15/17)

दर्शयित्वा हरेस्तत्त्वमासेतोराहिमाचलात् ।
सर्वदेवोत्तमत्वाख्यं प्रख्यातमकरोद् भुवि ॥ ३४ ॥
तस्मात् तत्त्वविदामाद्या तृतीया मारुतीतनुः ।
तस्मात् सर्वोत्तमो विष्णुर्वायुश्च तदनंतरम् ॥ ३५ ॥
उत्तमोऽपरदेवेभ्यः शुद्धधीश्च परे हरौ ।
यतश्च श्रुतिषूक्तोऽयं मरुद्रूपो गुरुर्मम ॥ ३६ ॥
इदं प्रमेयं स्वग्रंथे प्रस्ताव्य निरनीनयत्[1] ।
ततोऽपि परशुक्लाख्यमुक्तं त्रितयमेव हि ॥ ३७ ॥
एतदुक्तार्थदार्ढ्यार्थमेवं श्रुत्यादिचर्चितम् ।
एवं च प्राणरूपेण गुरुणा करुणावता ॥ ३८ ॥
[2]यदुक्तं तद्धि तच्छास्त्रमसच्छास्त्रं ततः परम् ।
ततः परे बुद्धिशुद्धिः किं वाच्याऽस्य जगद्गुरोः ॥ ३९ ॥
यस्येदृशानसदृशानवतारान् विपश्चितः ।
गृणंति तस्य वायोश्च किं वाच्या शुद्धबुद्धिता ॥ ४० ॥
किं च सर्वैरपि ग्रंथस्यारंभे पठ्यते तु या ।
सा [3]शांतिरंते पठितमुरुक्रमपदोदितम् ॥ ४१ ॥

---

[7] शंभोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः । (स्मृतिः)

[8] ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत् स्वभावः कैवल्यं स भवान् केवलो हरे ।
—इति म. भा. ता. निर्णये (2/118) ।

[1] सर्वमेतच्च कथितं तत्र तत्रामितात्मना ।
व्यासेनैव पुराणेषु भारते च स्वसंविदा ॥ —इति ता. निर्णये (18/29) ।

[2] यद्वै मनुरवदत् तद्भेषजम् । —इति श्रुतिः ।

[3] ओं शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा ।
शं न इंद्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥

सर्वोत्तमं पुनर्नंतुं जिज्ञास्यब्रह्मसंज्ञया ।
समाहूय नमस्कृत्य पुनस्तत्प्रियकिंकरम् ॥ ४२ ॥
प्राणं च तद्वत् ग्रंथादौ नमस्कर्तुं दिने दिने
बलज्ञानस्वरूपत्वात् सर्वासुरविमर्दने ॥ ४३ ॥
समर्थं वायुशब्देन समाहूय ननाम च ।
[1]यस्मादयिर्ज्ञानवाची वशब्दो बलवाचकः ॥ ४४ ॥
[2]तद्बलज्ञानशीलो यः स वायुरिति कथ्यते ।
सदा विष्णवर्चने मुख्यप्रतिमात्वमनन्यगम् ॥ ४५ ॥
तस्यैवास्तीति सर्वेषां दर्शयंती पुनः श्रुतिः ।
अस्ति त्वमेव ब्रह्मेति तमेव च प्रशंसति ॥ ४६ ॥
अदृश्यदेवतामुख्यसन्निधानवती तु या ।
देवालयस्थप्रतिमा तां च सर्वेऽपि पंडिताः ॥ ४७ ॥
प्रत्यक्षदेवस्त्वमिति पूजयंति दिने दिने ।
मालाकुण्डलहाराद्यैरलं कुर्वंति सर्वदा ॥ ४८ ॥
यदि साक्षाद् ब्रह्मणैक्यं श्रुतेरनुमतं भवेत् ।
तर्हि प्रत्यक्षशब्देन विशिनष्टि च तं कुतः ॥ ४९ ॥

---

नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारं । ॐ शांतिः शांतिः शांतिः ॥" इति ।

[1] अय पय गतौ इति धातुपाठः । ये गत्यर्थकास्ते ज्ञानार्थकाः । इति न्यायः

[2] सकर्षणाच्चापि जयातनूजो बभूव साक्षाद्बलसंविदात्मा ॥
सूत्रं स वायुः" —इति म. भा. ता. नि. (3/10

'नमो ब्रह्मण' इत्यस्मिन् पूर्ववाक्ये यतः श्रुतिः ।
नोवाचेदं पदं तेनाप्रत्यक्षं ब्रह्म तन्मतम् ॥ ५० ॥

यतश्च वायोर्ब्रह्मत्वं प्रत्यक्षपदपूर्वकम् ।
प्रायुंक्त चाव्यवहितोत्तरवाक्ये ततः श्रुतेः ॥ ५१ ॥

भावः सोऽयमिति प्रेक्षावतां संमतमेव हि ।
यदक्षेणेक्ष्यते वस्तु तदेवाहुस्त इत्यपि ॥ ५३ ॥

नमस्ते वायवित्येव या वायुं वक्ति सा श्रुतिः ।
यतो ब्रह्मतया नाह तत् परोक्षमभूद्धि यत् ॥ ५४ ॥

एवं विरुद्धयोरैक्यवाक् च तत्प्रतिमात्ववाक् ।
सर्वैरदृश्यस्य हरेर्यस्मादच्छिन्नसन्निधिः ॥ ५४ ॥

दृश्ये प्राणेऽस्ति तत्प्राणः प्रत्यक्षब्रह्मशब्दितः ।
इत्येव वाच्यं सुधिया नो चेत् कुप्यति तत्पदम् ॥ ५५ ॥

अतः शुद्धतरो वायुर्हरेश्च प्रियकिंकरः ।
अन्यदेवोत्तमश्चेति किं न वाच्यं विवेकिना ॥ ५६ ॥

मनस्यन्यद्वचस्यन्यद् भवेन्नो चेद्विचारय ।
हरिश्च वायोः परमः सर्वदेवोत्तमोत्तमः ॥ ५७ ॥

इति सिद्धमभूद्देवाः सर्वे शर्वपुरोगमाः ।
वायोरप्यवमा विष्णोरासन् किंकरकिंकराः ॥
तस्मादस्माभिरुक्तं यत् समस्तं तत्त्वमेव तत् ॥ ५८ ॥

वादिराजकृते श्राव्ये काव्ये भ(भा)व्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभून्मरुत्प्रियः ॥ ५९ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचित सरसभारतीविलासे सप्तमो विलासः ॥

— ० —

# अष्टमो विलासः

किं च पंचोपनिषदां[1] भावं त्वं च विचारय ।
सुरेषु वायोः सदृशं संचिंतय न कंचन[2] ॥ १ ॥
बलिना कलिना तेषां विपरीता क्वचित् क्वचित् ।
सुराणां च भवेद्बुद्धिर्नतु वायोर्महात्मनः[3] ॥ २ ॥
विजिते दानवकुले हृदिस्थहरितेजसा[4] ।
निजानुभावं तं मत्वा शक्राद्या दिगधीश्वराः ॥ ३ ॥
आस्माको विजयः सोऽयमित्यहं चक्रिरे किल ।
असमर्था बहिर्युद्धे क्रूरास्ते तस्करा इव । ॥ ४ ॥

---

[1] तलवकारछांदाम्यषट्प्रश्नबृहदारण्यकैतरेयाख्यपंचोपनिषदाम् । तथा चाग्रे वक्ष्यति (श्लो. 26, 59, 60) ।

[2] ॐ 'इयदामननात्' ॐ —इति ब्रह्मसूत्रम् (3/3/5) ।
"नामादारभ्य प्राणांतमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात् किंचिद् भूय इत्युक्तम् । तथाऽपि पूर्ववत् स्यादपीति न वाच्यम् । 'प्राणो वा सर्वेभ्यो भूयान् न हि प्राणाद् भूयान् प्राणो ह्येव भूयांस्तस्माद् भूयान् नाम' इति कौण्ठख्यश्रुतेः ।" —इति च तद्भाष्यम् ।

[3] 'अन्ये भागवतत्वेऽपि छिन्नधर्माः क्वचित् क्वचित् ।'
—इति महाभारततात्पर्यनिर्णये (18/19) ।

[4] ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ब्रह्मणो विजये देवा अमहीयंत ॥१॥
त ऐक्षंतास्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तद्धैषां विजज्ञौ ॥२॥
—इति तलवकारोपनिषदि ।

स्थित्वा देवेषु तद्ब्रह्म व्यजयद् देवदानवान् ।
देवेभ्योऽर्थाय विजयं तं देवा मेनिरे स्वयम् ॥ आविष्टा असुरैः....
—इति तद्भाष्ये

बुद्धिं प्रविश्य देवानां चक्रुर्विष्णुपराङ्मुखीम् ।
तदा महाकारुणिको हरिर्यक्षवपुर्धरः[1] ॥ ५ ॥

निजां तनुं समाच्छाद्य प्रादुरासीत् किलांतिके ।
तं ज्ञातुं प्रेषयामासुरग्निं तं च पुरैव सः ॥ ६ ॥

कोऽसि त्वमिति पप्रच्छ स चाहंकारतोऽब्रवीत् ।
अहमग्निर्महानस्मि दहेयमखिलं जगत् ॥ ७ ॥

इति तस्य वचः श्रुत्वा हसन् शुष्कतृणं तदा ।
निधाय पुरतो यक्षो दहेदमिति चाब्रवीत् ॥ ८ ॥

---

[1] तद्धैषां विजज्ञे तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति ॥
—इति तलवकारोपनिषदि ।

····तेषां प्रबोधाय जनार्दनः ।
यक्षरूपः प्रादुरभूदुमाशिवसमन्वितः ।
ब्रह्मणा चापि सहितः एतेभ्योऽपि परो ह्यहम् ।
एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः ॥
इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः ।
यूयमेतानपि ज्ञातुमशक्ताः किमु मामिति ॥ —इति तद्भाष्ये ।

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद् यक्षमिति ।
—इति तलवकारोपनिषदि ।

तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च ।
इंद्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् ॥ —इति च तद्भाष्यम् ।

अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति । तस्मिन् त्वयि किं वीर्यमित्यपि । इदं सर्वं दहेयं यदिदं पृथिव्यामिति ।
—इति तलवकारोपनिषदि ।

तस्मै तृणं निदधावेतत् दहेति । तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम् । स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति ।
—इति तलवकारोपनिषदि ।

अग्निश्च प्रज्वलन् वेगादभ्येत्य न शशाक तद् ।
दग्धुं कृतप्रयत्नोऽपि ततो निववृते भिया ॥ ९ ॥

कोणवायुं ततो देवास्त्वं याहीत्यवदन् किल ।
तं च पप्रच्छ यक्षोऽसौ का शक्तिस्त्वयि वर्तते ॥ १० ॥

तदा वायुरहंकाराच्चालयेयं गिरीनिति ।
उवाच किल तस्याग्रेऽप्याधाय तृणमेव तत् ॥ ११ ॥

चालयेदमिति प्रोक्तो वेगादावृत्य सर्वतः ।
वायुः प्रयतमानोऽपि नाशक्नोत् तस्य चालने ॥ १२ ॥

सोऽप्यग्निवल्लज्जितः सन् ततो निववृते किल ।
ततः सर्वे सुराः [2]शक्रं याहीत्यूचुस्तदंतिकम् ॥ १३ ॥

तस्यागमनतः पूर्वं कुशलोऽसौ[3] विचारयेत् ।
मामेव च न मत्तोऽयं श्रोतुं योग्यो मदांदधीः ॥ १४ ॥

इति मत्वा[3] स यक्षोऽपि साक्षाच्छक्रस्य मातरम्[4] ।
गुरुं च पार्वतीं तत्र निधायांतर्दधे किल ॥ १५ ॥

---

[1] अथ वायुमब्रुवन् वायवे तद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति । तस्मिन् त्वयि किं वीर्यमित्यपि । इदं सर्वमाददीयं यदिदं पृथिव्यामिति । तस्मै तृणं निदधावेतदादत्स्वेति तदुप्रेयाय सर्वजवेन तन्न शशकादातुम् । स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति । —इति तलवकारोपनिषदि ।

[2] अथेंद्रमब्रुवन् मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति तदभ्यद्रवत् । तस्मात् तिरोदधे । —इति तलवकारोपनिषदि ।

माता [1]सा पंकिलं पुत्रमिव विद्राव्य तन्मदम् ।
साक्षात् स्वशिष्यस्येंद्रस्य विज्ञानं दातुमर्हति ॥ १६ ॥
इत्युमां तत्र संस्थाप्य यक्षोऽलक्ष्योऽभवत् किल ।
सा च यूयं हृदिस्थस्य हरेरसुरवैरिणः[2] ॥ १७ ॥
तेजसैवासुरान् सर्वान् युद्धेऽजयत दुर्जयान् ।
न तु स्वशक्त्या यच्छक्र हरिणोपेक्षिते सति ॥ १८ ॥
तृणचालनशक्तिश्च यतो नासीद्दिगीशयोः ।
अतो यूयमहंकारं त्यक्त्वा भजत तं प्रभुम् ॥ १९ ॥
इत्युक्त्वा पार्वती सा च तत्रैवांतर्दधे किल ।
शक्रोऽप्यागत्य देवानामुक्त्वा बोधमुमोदितम् ॥ २० ॥

---

[3] स तस्मिन्नेवाकाशे स्त्रियमाजगाम । बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद् यक्षमिति । —इति तलवकारोपनिषदि ।

तत्रेंद्रोऽधिकबुद्धित्वात् पृच्छतीति जनार्दनः ।
मत्तः शिवाद् ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् ॥
इति ज्ञापयितुं तत्र नादृश्यत स केशवः ।
एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् ॥ —इति च तद्भाष्यम् ।

[4] पुंसः प्रकृत्यां च पुनर्विरिंचाच्छिवोऽथ तस्मादखिलाः सुरेशाः । जाताः सशक्राः............ —इति म. भा. ता. निर्णये (3/18, 19) ।

[1] साक्षाद्गुरुश्च साक्षान्माता अप्रक्षालितमलं पुत्रमिव शिष्ये किंचिदवद्यमस्ति चेत्तमनुगृह्णीयादिति लोकन्यायः ।
इति श्रीवादिराजतीर्थश्रीपादकृत तलवकारभाष्यटिप्पण्याम् ।

[2] ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजयेऽमहीयध्वमिति । ततो हैव विदांचकार ब्रह्मेति । —इति तलवकारोपनिषदि ।
उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम् । —इति च तद्भाष्ये ।

शमयामास देवानामहंकारं महामतिः ।
तदा ब्रह्मा च वायुश्च शांतौ हरिसमीपगौ ॥ २१ ॥
असुरापादितमदात् बहिर्भूतौ किल प्रभू ।
एवं चासुरतो बाधः कथं स्यादनयोर्वद ॥ २२ ॥
रुद्रो बहिस्थरूपेणैवाजितोऽप्यसुरौजसा ।
सुराणां हृद्गरूपेण त्वासीद्दैत्यपराजितः ॥ २३ ॥
इत्थं सर्वेश्वरो(सर्वोत्तमो) विष्णुर्दुरहंकारिणः सुरान् ।
तृणेनैव तृणीकृत्य [1]चक्रे भग्नमनोरथान् ॥ २४ ॥
उमामुखेन सत्तत्वं प्रबोध्य विबुधर्षभान् ।
अखण्डयद्गर्वमेषामित्याहोपनिषच्छुभा ॥ २५ ॥
स्पष्टं तलवकाराख्या तस्मात् सर्वसुरा अपि ।
मुख्यप्राणस्य न समाः कथं तत्स्वामिनो हरेः ॥ २६ ॥
समाः स्युरुत्तमत्वं तु दूरोपास्तं दिवौकसाम् ।
बहिर्जयस्तु कृष्णस्य येषामाभूद्रणांगणे ॥ २७ ॥
अंतस्त्वसुरसंघेन तेऽपि देवाः पराजिताः ।
तस्मादसुरसंघस्य विजये क्व जयैषिणाम् ॥ २८ ॥
अपि शक्तिर्मुख्यवायोरितरेषां दिवौकसाम् ।
मनआदींद्रियाधीशाः पुरा देवाः शिवादयः[2] ॥ २९ ॥

---

[1] 'तेन विना तृणमपि न चलति' इति श्रुतिवाक्यस्य व्याख्यारूपोऽयं प्रसंगः ।

[2] लोकात्मकं पद्ममुष्य मध्ये पुनर्विरिंचोऽजनि सद्गुणात्मा ।
तस्मात्पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्णयाय ॥
—इति म. भा. ता. निर्णये (3/22, 23)।

अहं श्रेयानहं [1]श्रेयानित्यहं चक्रिरे किल ।
ब्रह्मापरोक्षिणामेषां सर्वज्ञानां महात्मनाम् ॥ ३० ॥
कथं स्वभावशुद्धानामहंकारो भवेदयम् ।
विना स्वहृदि संविष्टं कलिं कलहकारिणम् ॥ ३१ ॥
बलिना कलिना तस्मान्मतिरन्यादृशी कृता ।
इति वाच्यं यस्तु वेद ततो भक्तियुतो भवेत् ॥ ३२ ॥
अद्यापि भूताविष्टो यः स द्वेष्टि पितरं किल ।
तदा प्राणः सुरगुरुः स्वीयानां बुद्धिशुद्धये ॥ ३३ ॥

---

[1] अहंश्रेयोविवादं तु येन कृत्वाऽखिलाः सुराः ।
असमर्थाः स्वरक्षायां स वायुः सुरनायकः ॥
विवदंतोऽखिला देवा ययुर्नारायणं प्रभुम् ।
अहं श्रेयानहं श्रेयानिति वायुपुरःसराः ॥
उक्तं भगवता तेन येन त्यक्तेऽखिला अपि ।
स्थातुं न शक्ताः स श्रेयानित्युक्ताः पुनरागताः ॥
उत्क्रांताश्च पुनः सर्वे तद्विज्ञस्यै पृथक् पृथक् ।
सुपर्णशेषरुद्रेंद्रसूर्यादिषु पृथक् पृथक् ॥
उत्क्रांतेषु ब्रह्मदेहाच्छरीरं न पपात ह ।
ऋत उत्क्रांतमेकं तु तदन्ये निवसंति च ॥
प्राण उच्चक्रमिषति स्थातुं नाशक्नुवन् परे ।
प्राणं विना न च ब्रह्मा तं विना प्राण एव च ॥
अन्योन्यापाश्रयाच्छक्तौ स्थातुमन्ये कृतस्ततः ।
तस्मात् प्राणो वरो देवेष्विति सर्वेऽपि मेनिरे ''—इत्यादि पवमाने
—इति बृहदारण्यकोपनिषद्भाष्ये (8/1-14) ।

कलेश्च कालने शक्तस्तत्रोपायमचीकरत् ।
स्वेनैव स्वमहिम्न्युक्ते स्यादहंकारिता मम[1] ॥ ३४ ॥

चतुर्मुखमुखेनैव वाचयिष्यामि मे बलम् ।
यः पूर्वजन्मनि प्राणः स हि वेत्ति बलं मम ॥ ३५ ॥

श्रद्धामद्धा करिष्यंति तद्वाक्ये च सुरा इमे ।
इति मत्वा सुरैः साकं ययौ लोकं प्रजापतेः ॥ ३६ ॥

स च पृष्टः सुरैः सर्वैः प्रोवाच प्रहसन् किल ।
यस्योत्थाने प्रवेशे च देहः पतति तिष्ठति[2] ॥ ३७ ॥

स एव सर्वदेवानां गुणैः श्रेष्ठो भविष्यति ।
वयसा च स एवैकः सर्वज्येष्ठो भविष्यति ॥ ३८ ॥

---

[1] सर्वथाऽनार्यकर्मैतत् प्रशंसा स्वयमात्मनः । —इति भारते

[2] तत्र प्राणात्मना वायुर्मनोरूपेण शंकरः ।
शेषः सुपर्ण इंद्रश्च मनांस्येव पृथक् पृथक् ॥
अहंभावमनो रुद्रः शेषोऽसौ पांचरात्रिकः ।
वैदिकं गरुडश्चेंद्रो यज्ञादिविषयं मनः ॥
श्रोत्रं चंद्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।
एते देवा तदन्ये च सर्वप्राणिषु संस्थिताः ॥
उपासते सदा विष्णुं परमात्मानमच्युतम् ।
वाचा हिंसामकुर्वंस्ते विनिंदंतः परस्परम् ॥
ते विष्णोराज्ञयाऽवोचन्नुत्क्रमाम पृथक् पृथक् ।
देहादब्जभवस्यास्माद् यस्मिन्नुत्क्रांत एव हि ॥
शरीरं पद्यते श्रेयान् स न इत्यवधार्यताम् ।
ततः क्रमेण वाग्याद्या निष्क्रांतास्तेषु सर्वशः ॥
निष्क्रांतेषु न वै पातः शरीरस्याभवद् क्वचित् ।

इत्थमुक्ताः शरीरात् ते निरीयुः क्रमशः सुराः ।
तदा प्राणस्य बलतो देहोऽसौ नापतत् किल ॥ ३९ ॥
चक्षुर्मात्रं नेक्षतेऽर्थं चक्षुर्देवे गते सति ।
देहोंऽधदेहवज्जीवन्नेव प्राणबलादभूत् ॥ ४० ॥
एवं मनःश्रोत्रमुख्यदेवानां च क्रमाद्गतौ ।
देहोऽसौ नापतद्वायोः सत्त्वेनातिबलीयसः ॥ ४१ ॥
जीवन्नेवाभवन्मूढबधिरादिशरीरवत्
एवं संवत्सरं प्रोष्य क्रमेणांते प्रविश्य च ॥ ४२ ॥

---

वायावुत्क्रांत एवैतच्छरीरमपतत् क्षितौ ।
उदासीनवदास्तां तौ केशवश्चाब्जसंभवः ॥
तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः ।
पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः ॥
नोत्थानमभवत्तेषु प्रविष्टेष्वपि सर्वशः ।
वायौ प्रविष्टे तूत्थानं कायस्यासीत् तदैव च ॥
उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः ।
उत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् ॥
भृत्या वयं तवैव स्मस्त्वमस्माकं पतिः सदा ।
स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् ॥
इत्यूचुर्वह्निशेषेशशक्रचंद्रादिकाः पृथक् ।
वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद् दिवौकसाम् ॥
तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् ॥
वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः ॥

—इति महैतरेयोपनिषद्भाष्ये (1/4) ।

ऊचुः किलेपच्छांतास्ने तत्तदिंद्रियगोलके
उच्चक्राम ततः प्राणस्तस्मिन्नुत्क्रामति प्रभौ ॥ ४३ ॥
बलादुत्तिष्ठति हये यथा पट्वीशशंकवः[1] ।
अनुव्रजंति तच्छक्त्याऽऽकृष्टास्तद्वदिमे सुराः ॥ ४४ ॥
अनुजग्मुः प्राणमेव देहोऽसौ तत्क्षणेऽपतत् ।
पुनः प्राणः स्वानुगतान् विहाय विबुधानिमान् ॥ ४५ ॥
स्वस्यैव शक्तिमतुलां विष्वक् विख्यापयन् प्रभुः ।
नान्यप्रवेशाद्देहोऽयमुत्थितस्त्विति बोधयन् ॥ ४६ ॥
स्वयमेवाविशद्धाद्यं देहं न तु सुरैः सह ।
कस्य शक्त्योत्थितो देहः इति शंकापनुत्तये ॥ ४७ ॥
तैः सहैव प्रवेशे तु साऽपि शंका भवेद् ध्रुवम् ।
मामृते स्थातुमप्येषां शक्तिर्नास्तीति बोधयन् ॥ ४८ ॥
निर्याणकाले देवैश्च सहैव प्राग्विनिर्ययौ ।
पट्वीशशंकुवत् तेषां स्थातुं शक्तिश्च नाभवत् ॥ ४९ ॥
सुरेष्वेकैकस्य पुरा गमने च स्वयं स्थितेः ।
देहस्यापतनाद्देवैः सहैव गमनेऽप्ययम् ॥ ५० ॥
देहो मद्गमनादेव पतितो नान्यनिर्गमात् ।
इत्थं प्रेक्षावतां ज्ञातुं शक्यं तेन सहैव तैः ॥ ५१ ॥
निर्गतोऽभूत् स तु प्राणः प्रवेशे त्वेकलोऽविशत् ।
प्राणे प्रविष्टे देहोऽसौ तत्क्षणादुत्थितः किल ॥ ५२ ॥

---

[1] अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैंधवः पट्वीशशंकून् संवहेदेवं हैवेमान् प्राणान् संबबर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति । —इति बृहदारण्यके (8/13) ।

छिन्नगर्वास्ततः सर्वे गीर्वाणाः शर्वपूर्वकाः ।
व्राताद्भीते कलौ याते पुनः शुद्धधियोऽविशन् ॥ ५३ ॥
तमेव देहं राज्ञि स्वं पुरं विष्टे भटा इव ।
इत्थं देहे वायुगतौ पतिते तस्य चागते ॥ ५४ ॥
उत्थिते सति सर्वे च देवा विस्मितमानसाः ।
अन्वयव्यतिरेकाभ्यां वायोरुत्तमतां हृदि ॥ ५५ ॥
निश्चित्य तुष्टमनसस्तुष्टुवुस्तं सुरोत्तमम् ।
त्वमेव वायो ज्येष्ठोऽसि [1]श्रेष्ठश्चासि दिवौकसाम्[2] ॥ ५६ ॥

---

निःसृत्य कायादुत पद्मयोनेः संप्राविशन्क्रमशो मारुतांताः ।
पपात वायोर्गमनाच्छरीरं तस्यैव चावेशत उत्थितं पुनः ॥
— इति म. भा. ता. निर्णये (3/25) ।

[1] 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ।' —इति छान्दोग्ये (5/1) ।
स यथा सुहयः पड्वीशशंकून् संखिदेदेवमितरान् देवान् प्राणान् समखिदत्
तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥
—इति छांदोग्योपनिषद्भाष्ये (5/1/9) ।

[2] वायुज्येष्ठ्यज्ञानस्य फलमुक्तं छांदोग्यभाष्ये (5/1)—
यः श्रेष्ठज्यैष्ठ्यमखिलदेवानां वायुमंजसा ।
वेद स स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः ॥
समीपे वसतां श्रेष्ठो वसिष्ठस्यैत वेदनात् ।
एकस्थाने स्थितिस्तु स्यात् प्रतिष्ठाऽज्ञस्य चेच्छतः ॥
संपद्धेतुः संपदः स्युर्गृहं चायतनं विदुः ॥
ज्येष्ठः श्रेष्ठो वसिष्ठश्च संपादयतनं तथा ।
वायुरेव महांस्तस्य प्रसादादग्निरेव तु ॥
उपचारवसिष्ठः स्यात् प्रतिष्ठैवं रविस्ततः ।
संपदिंद्रस्तथैवोक्तो रुद्र आयतनं तथा ॥ —इति प्राभवे—इति ।

अस्माकमिति तं स्तुत्वा तस्थुर्देहे तदाज्ञया ।
ब्रह्मा तदा स्वीयदेहमुपेक्ष्य हरिणा सह[1] ॥ ५७ ॥

परीक्षायै किल ददौ ते च देवास्तदाज्ञया ।
देहे तस्मिन् विचार्येत्थं सामर्थ्यं मातरिश्वनः ॥ ५८ ॥

तमेव वायुं सर्वेशं मत्वा गर्वं जहुः किल ।
इति [2]छंदोगायकानां महोपनिषदेव सा ॥ ५९ ॥

एवमेव च [3]षट्प्रश्ने बृहदारण्यके [4]तथा ।
कथेयमैतरेये[5] च श्रुता सकलसंमता ॥ ६० ॥

यदैवोत्क्रमणोद्योगं वायुश्चक्रे शरीरतः ।
तदाऽतिसंकटं प्रापाश्चक्षुराद्यभिमानिनः ॥ ६१ ॥

देवाः सर्वे प्राणमेव त्वन्नः श्रेयानितीडिरे ।
नोच्चक्राम तदा प्राणः प्रजापत्युक्तमार्गतः ॥ ६२ ॥

तावताऽपि स्वसामर्थ्यसिद्धिः सर्वदिवौकसाम् ।
यतो बभूव तेनासौ हृद्गुहातो न निर्गतः ॥ ६३ ॥

---

ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च ।
ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ॥ —इति च तत्रैव ।

[1] तस्मात्स एको विबुधप्रधानः इत्याश्रिता देवगणास्तमेव ।
हरेर्विरिंचस्य च मध्यसंस्थितेस्तदन्यदेवाधिपतिः स मारुतः ॥
—इति महाभारततात्पर्यनिर्णये (3/24-26) ।

[2] छांदोग्ये—5/1/6—15

[3] षट्प्रश्ने—2/1/2—3

[4] बृहदारण्ये—8/1—14

[5] ऐतरेये—2/1—4

इति कल्पांतरगता च्छांदोग्योपनिषच्छ्रुता ।
कथाऽत्राप्यनुसंधेया यतो ग्रंथकृतो मम ॥ ६४ ॥
अन्वयव्यतिरेकाभ्यां स्पष्टीकर्तुं मरुद्बलम् ।
ऐतरेयोपनिषदः कथाऽप्यत्रानुवर्णिता ॥ ६५ ॥
या सा कल्पांतरे देवैर्विस्तृत्यैव प्रदर्शिता ।
तत्र प्राणस्योत्क्रमणे देहपातोऽप्युदीरितः ॥ ६६ ॥
तत्प्रवेशे च देहस्य तदैवोत्थितिरीरिता ।
अतो विरोधशंका वा तथा ग्रंथकृतो मम ॥ ६७ ॥
अनुक्तकथना शंका वाऽत्र नास्ति विचारणे[1] ।
अर्थस्य गौरवं लाघवं च ग्रंथस्य दर्शनात् ॥ ६८ ॥
कथाद्वयं संकलय्य श्रोतॄणां बुद्धिशुद्धये ।
कृतिना वादिराजेन यतः कृतिरियं कृता ॥ ६९ ॥
एवं च मुख्यप्राणस्य कः सुरेषु समो भवेत् ।
बुद्धिशुद्धिश्च कस्य स्याद्यथाऽस्य जगतां गुरोः ॥ ७० ॥
अतः सर्वसुरेभ्योऽपि प्राण एवोत्तमोऽभवत् ।
प्राणस्यापि ह्रियः प्राणः सोऽभूत् सर्वोत्तमोत्तमः ॥ ७१ ॥
अपि चानंतजीवानां भवद्भूतभविष्यताम् ।
हृदि स्थित्वा पंचरूपी यस्य मंत्रत्रयं सुधीः ॥ ७२ ॥
अहर्निशं चैकविंशत्सहस्रं षट्शताधिकम् ।
यथा भवति मानेन तथाऽन्यूनतया जपन् ॥ ७३ ॥

---

[1] बलमिंद्रस्य गिरिशो गिरिशस्य बलं मरुत् ।
बलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः ॥
—इति म. भा. ता. निर्णयोद्धृत महाभारतवचनम् ।

मुख्यप्राणो मम गुरुस्तस्य हंसात्मनो हरेः ।
मुख्यदासोऽभवन्नित्यमित्थं विष्णोर्महामनुम् ॥ ७४ ॥

अहर्निशं च जपतः स्यात् कदा मतिरन्यथा ।
हरौ कदाचित् स्पर्धाऽस्य यदि स्यान्न जपेत् सदा ॥ ७५ ॥

जपाभावेऽपि नष्टं स्याज्जगदेतच्चराचरम् ।
एवं च जीवनार्थी यः स वायोश्च श्रियःपतेः ॥ ७६ ॥

मत्यैक्यं पोषयेन्नित्यं दूषयेन्न कदाचन ।
दिने दिनेऽप्यसंख्यातनानाजीवेष्वहर्निशम् ॥ ७७ ॥

अनंतानंतधा विष्णोर्मनुमेतमनुत्तमम् ।
जपन्नयं वायुदेवः सर्वजीवोत्तमो न किम् ॥ ७८ ॥

विष्णुभक्तौ च सदृशः कः स्यादस्य विचार्यताम् ।
ईदृशो यो जगत्त्राणहेतुभूतः समीरणः ॥ ७९ ॥

सर्वजीवाग्रणीस्तस्मात् तस्यापीशः श्रियः पतिः ।
आसीत् सर्वोत्तमो ब्रह्मपिता शंभोः पितामहः ॥ ८० ॥

वायुः स्वमूलरूपे च स्वावतारेष्वपि प्रभुः ।
उक्तरीत्या यतः सिद्धस्ततः शुद्धतरोऽभवत् ॥ ८१ ॥

तस्मादुक्तप्रकारेण वायुरेकः परे हरौ ।
शुक्लोऽभूद्भारती शुक्लतमाऽसीत् तदनुग्रहात् ॥ ८२ ॥

वादिराजकृते श्र(श्रा)व्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभून्मरुत्प्रियः ॥ ८३ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचित सरसभारतीविलासे अष्टमो विलासः ॥

— ० —

# नवमो विलासः

विश्वंभरस्य भर्तुर्मे शक्त्या कोऽस्ति समस्त्विति[1] ।
गरुडोऽप्यसुरावेशादहं चक्रे क्वचित् किल ॥ १ ॥
तपसाऽऽराध्य यो विष्णुं तस्य वाहनतामगात्[2] ।
ईदृशस्यापि कुमतिः कल्यावेशान्न संशयः ॥ २ ॥
किंचिद्भारं दर्शयित्वा तं च कृष्णो न्यपातयत् ।
महीतले तदा काकास्तस्य शोकं ददुः किल ॥ ३ ॥
अतोऽद्यापि स्वतुण्डेन गरुडाकारधारिणम् ।
अभ्येत्य बलवंतं च घ्नंति काकाः पतत्रिणम् ॥ ४ ॥
नष्टाहंकारचित्तं च पुनरंगीचकार तम्[3] ।
इत्याह भारते व्यासस्तत् तस्यापि न शुद्धता ॥ ५ ॥
स्यमंतकार्थे रामेण कृतः शेषस्वरूपिणा[4] ।
विरोधं स्वानुजे कृष्णे दनुजाविष्टचेतसा ॥ ६ ॥

---

[1] कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः ।
मया योऽहं विशिष्टः सत् वहामीमं सबांधवम् ॥
—इत्यादि गरुडवचनम् महाभारते (105/3-17) ।

[2] नागारिरुग्रबलपौरुष आप विष्णोर्वाहत्वमुत्तमजवो यदपांगलेशम् ।
आश्रित्य शक्रमुखदेवगणैरचिंत्यं श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥
—इति द्वादशस्तोत्रे ।

[3] इत्युक्त्वा भगवान् तस्य स्कंधे बाहुं समासजत् ।
एवं विष्णुबलाक्रांतो गर्वनाशमुपागतः ।
गरुडो बलवान् राजन् वैनतेयो महयशाः ॥
—इति च महाभारते (105/32) ।

[4] स्यमंतकार्थे रामोऽपि कृष्णस्य विमनाऽभवत् ।
—इति म. भा. ता. नि (18/19) ।

अतो मनुज दुर्बुद्धिं त्यज सर्वोत्तमं भज ।
व्रज वैकुंठपदवीं निजं स्थानं तदिच्छया ॥ ७ ॥
दुर्वासाः [1]शंकरस्यांशो हंसरूपी निरंहसे ।
अंबरीषाय चुक्रोध क्रोधाविष्टमनोरथः ॥ ८ ॥
तदाऽसुराणामरिणा सोऽरिणाऽनुद्रुतो भयात् ।
जगाम ब्रह्मसदनं सोऽप्यधोवदनोऽभवत् ॥ ९ ॥
अलब्धकार्यः कैलासमगमच्छंकरालयम् ।
सोऽपि भीतो [2]हरेश्चक्रादाहानुसर तं हरिम् ॥ १० ॥
यस्येदमायुधं पुत्रेत्युक्तो वैकुंठमन्वगात् ।
हरिः स्वभक्तवात्सल्यान्नामोचयदमुं मुनिम् ॥ ११ ॥
अतोंऽबरीषधामैव गतः सोऽपि हरेररिम् ।
स्तुत्वैव मोचयामास न तु सोऽप्यात्मशक्तितः[3] ॥ १२ ॥
अतः शिवस्यापि मतिर्विरुद्धाऽभवदच्युते ।
हरेः सर्वोत्तमत्वं च सिद्धमासीज्जगत्त्रये ॥ १३ ॥

---

[1] देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ।
—इति म. भा. ता. नि (18/26) ।

[2] मौलौ यच्चरणाम्बु फालफलके यस्यांघ्रिरेणुः कथा
कर्णे वाचि यदीयनाम हृदि यद्रूपं यदास्वादितम् ।
कुक्षौ यत्तपसेऽपटं कटितटं व्याघ्राजिने संस्थितिः
पादौ यत्पुरचारिणौ स हि सदा तत्किंकरः शंकरः ॥
—इति तीर्थप्रबंधे (II/26) ।

[3] गते च दुर्वाससि सोंऽबरीषो द्विजोपयोगातिपवित्रमाहरत् ।
ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च परानुभावम् ॥
—इति भागवते (9/5/24)

तस्माद्दुर्यायुधादेव [1]बिभ्यतुर्ब्रह्मशंकरौ ।
तच्चक्रं यस्य वशगं सोऽभूत् सर्वोत्तमोत्तमः ॥ १४ ॥

द्रौण्यात्मा शंकरः कृष्णमवजज्ञे पदे पदे ।
हरिः [2]शशाप किल तं दुर्योधनमतानुगम् ॥ १५ ॥

हते च रावणे शंभुर्धनुरादाय राघवम् ।
आजुहाव रणायेति कथा रामायणे स्फुटा[3] ॥ १६ ॥

एवं च शंकरस्यापि कल्याविष्टं मनोऽभवत् ।
तस्मादन्यसुराणां का वार्ता तदनुवर्तिनाम् ॥ १७ ॥

इंद्रश्च पारिजातार्थं युयुधे हरिणा सह ।
अचीकरद्धरौ वैरं मखभंगे कृते सति ॥ १८ ॥

पारिजातापहरणे सेश्वरा दिगधीश्वराः ।
आयुध्य हरिणा सार्धं युद्धे क्रुद्धमनोरथाः ॥ १९ ॥

---

[1] 'दुर्गा चक्राधिदेवी' (पद्यमालायां) इति ह्युक्तम् ।

[2] ........तेनैव नराधिरुढो गम्यस्तव स्यान्न च भूमिभागः ।
दुर्गंधयुक्तो व्रणसंचितांगः सदा चरः स्या विपिनेषु मंद ।
यावद्भुवि स्यादिह पार्थतंतुर्व्यासोऽपि तं प्राह तथेति देवः ॥
— इति म. भा. ता. निर्णये (28/190, 191) ।

[3] इतीरिते त्वब्जभवेन शूली समाह्वयद्राघवमाहवाय ।
वरं मदीयं त्वगणय्य रक्षो हतं त्वया तेन रणाय मैहि ॥
इतीरिते शूलधरेण राघवो धनुः प्रगृह्याशु शरं च संदधे ।
विगृह्यमाणे चलिता वसुंधरा पपात रुद्रोऽपि धराप्रकंपतः ॥
अथोत्थितश्चासुरभाववर्जितः क्षमस्व देवेति ननाम पादयोः ॥
उवाच च त्वद्वशगोऽस्मि सर्वदा प्रसीद मे त्वद्विषयं मनः कुरु ॥
—इति म. भा. ता. निर्णये (8/219-221) ।

बलिना कलिना विद्धास्ते च सिद्धा विचारणे ।
भूभारभूतदैत्यानां वधाय क्षीरसागरम् ॥ २० ॥
गत्वा ये प्रार्थयामासुर्जप्त्वा तप्त्वा च सत्तपः ।
तेषामद्येदृशी मन्ये कुबुद्धिर्न स्वभावतः ॥ २१ ॥
अतोऽन्यावेशतो वाच्या भूताविष्टांतरात्मवत् ।
तस्माद्वाव्यितरे देवाः कल्याक्रांतमनोरथाः ॥ २२ ॥
वायोरपि समा नासंस्तत्कथं स्युर्हरेः समाः ।
किं च [1]तूर्णं गृहीत्वेति श्लोकं त्वं च विचारय ॥ २३ ॥
निरायुधो हरेः पक्षी सायुधं च सवाहनम् ।
दोर्भ्यां गृहीत्वा त्र्यक्षं ते चिक्षेप किल पृष्ठतः ॥ २४ ॥
समस्यापि समो नाभूद्यस्तार्क्ष्यस्य हरेर्बलात् ।
स ते कथं विरूपाक्षः सदृक्षः स्यान्मम प्रभोः ॥ २५ ॥
तथाऽपि भक्तवात्सल्यात् करुणासागरो हरिः ।
न मुंचति सुरानेतान् योऽसौ सर्वसहापतिः ॥ २६ ॥
पंकांकिततनुं स्वतनुं यथा माता कृपावती ।
पंकं प्रक्षाल्य रक्षेद्धि तथा स्वान् रक्षति प्रभुः ॥ २७ ॥
विषमप्यमृतीकृत्य पपौ किल मरुत् पुरा[2] ।
वायौ भक्तिमतां चापि मतिरस्माकमीदृशी ॥ २८ ॥

---

[1] "तूर्णं गृहीत्वा बाहुभ्यां विषाणे तस्य नंदिनः ।
सशूलपाणिं चिक्षेप वैनतेयो धनुः शतम् ॥ —इति भागवते ।

[2] वायुरस्मा उपामंथम् पिनष्टि स्म कुनन्नमा ।
केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह ॥—इति ऋग्वेदे (10/136/7) ।
अथ त्वदाज्ञां पुरतो निधाय निधाय पात्रे तपनीयरूपे ।
स्वयं त्वनिर्मथ्य बलोपपन्नं पपौ स वायुस्तदुतास्य जीर्णम् ॥
—इति म. भा. ता. निर्णये (10/16) ।

विषकल्पेन कलिनैवाल्पीकृत्य सुरावलीम् ।
यतः प्रसाधयामोऽस्मन्मतं विस्मापनं सताम् ॥ २९ ॥

यतो [1]भागवते विष्णुपादोदकनिषेवणात् ।
"शिवः शिवोऽभू"दित्याह शुकः परमधार्मिकः ॥ ३० ॥

अतः प्रागशिवत्वं च शुकस्यापि हि संमतम् ।
स्वभावतो शिवत्वं तु सुराणां न कदाचन[2] ॥ ३१ ॥

सात्त्विकानां ततः सिद्धः कल्यावेशः शिवेऽपि च ।
[3]व्योमकेशः किलेशानो व्योम विष्णुपदं किल ॥ ३२ ॥

[4]शासनस्थाऽभवत् तस्माद्धरस्य हरिदासता ।
अद्यापि भक्तेर्दृढतां दर्शयंतो नृपांतिके । ॥ ३३ ॥

भृत्या भटा मच्छिरसस्तव पादस्य च प्रभो ।
ग्रंथिरित्याहुरेवं च सदा विष्णुपदे शिरः ॥ ३४ ॥

घटयन् धूर्जटिर्विष्णुभक्तेष्वग्रेसरोऽभवत् ।
मम मूर्ध्नि भवत्पादः इति यो वक्ति मानवः ॥ ३५ ॥

---

[1] यच्छौचनिःसृतसरित्प्रवरोदकेन
तीर्थेन मूर्ध्न्यधिधृतेन **शिवः शिवोभूत्** ॥ —इति भागवते (3/28/22) ।

[2] द्रव्यं कर्म च कालश्च **स्वभावो** जीव एव च ।
यदनुग्रहतः संति न संति यदुपेक्षया ॥ —इति भागवते (2/10/12) ।

[3] **गंगाधरोऽ**धकरिपुः क्रतुध्वंसी वृषध्वजः ।
**व्योमकेशो** भवो भीमः स्थाणू रुद्र उमापतिः ॥ —इत्यमरः ।
'**व्योम**·······वियद्विष्णुपदं वा तु........ ।' —इत्यमरः ।

[4] **व्योमकेश**स्य शिरसि सदा विष्णुपदं न किम् ।
अतः कोशज्ञसंमत्या शिवो दासो न किं वद ॥
—इति हरिभक्तिलतायाम (381) ।

सकृद्यस्य पदं मूर्ध्नि यो धारयति च प्रभोः ।
तं च तद्भक्तमेवाहुः प्रांचः शास्त्रविदो बुधाः ॥ ३६ ॥

सदा विष्णुपदासक्तमस्तको यस्त्रिलोचनः ।
नित्यं च हरिभक्तत्वं तस्य शंभोरभूद्बलात् ॥ ३७ ॥

गंगाधरः किल शिवो गंगा [1]विष्णुपदी किल ।
अतोऽपि शासनस्थाऽभूद्धरस्य हरिदासता ॥ ३८ ॥

सकृत् तीर्थं यस्य मूर्ध्नि सोऽपि तत्किंकरः किल ।
नित्यं च [2]तीर्थपादस्य तीर्थशोभितमस्तकः ॥ ३९ ॥

स तस्य नित्यभक्तोऽभूत् तीर्थमौलिं वंदति यम् ।
गुरूणां शासनं मान्यं यदा राज्ञां च शासनम् ॥ ४० ॥

तदा मान्यतमं सर्वं श्लाघ्यं लिंगानुशासनम्[3] ।
संदेहे सति शब्दानां वंदत्यद्धाऽपि यद् बुधाः ॥ ४१ ॥

शिलाशासनकल्पं तदासीदेतद्धि शासनम् ।
स्थाने स्थाने धर्मगुप्त्यै देवतायतने कृतम् ॥ ४२ ॥

ग्रामे ग्रामे कृतं को वा शासनं लंघयेत् पुमान् ।
भाषया लिखितं चापि शासनं श्लाघ्यमेव हि ॥ ४३ ॥

किं वाच्या श्लाघ्यता सर्वसंमत्या देवभाषया ।
कृतस्य शासनस्यांगीकृतस्य सकलैरपि ॥ ४४ ॥

---

[1] **गंगा विष्णुपदी** जह्नुतनया........ । —इत्यमरः ।

[2] पुण्यश्लोक**तीर्थपादो** वेदवेद्यो दयानिधिः ।
—इति कृष्णाष्टोत्तरशतनामसु ।

[3] '**गंगाधरः**' किल शिवो गंगा विष्णुपदी किल ।
अतोऽपीशः कोशमते विष्णोर्दासो न किं वद ॥
— इत्यादि हरिभक्तिलतायाम् (38/92) ।

अतस्ते शंकरः कृष्णकिंकरोऽभून्न संशयः ।
ईदृशस्यापि कुमतिर्यदि शंभोर्भवेत् क्वचित् ॥ ४५ ॥
तदन्यावेशजं मन्ये न तु तस्य स्वभावजम् ।
सर्वदा पितृभक्तो यः पुत्रः क्वापि कदाचन ॥ ४६ ॥
यदि द्वेष्टि स्वपितरं भूताविष्टं वदंति तम् ।
तत्सर्वजनसंमत्या सिद्धोऽभूद् भुवनत्रये ॥ ४७ ॥
वायोरितरदेवानां कल्यावेशः क्वचित् क्वचित्[1] ।
अतश्च मध्यमार्गोऽयमभूत् सकलसंमतः ॥ ४८ ॥
वादिराजकृते श्राव्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूच्छिवप्रियः ॥ ४९ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचित सरसभारतीविलासे नवमो विलासः ॥

— ० —

---

[1] अन्ये भागवतत्वेपि छिन्नधर्माः क्वचित् क्वचित् ।
—इति महाभारततात्पर्यनिर्णये (18/19) ।

देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ।
ऋषिमानुषगंधर्वा वक्तव्याः किमतः परे ।
जन्मजन्मांतराज्ञानादवजानंति यत्सदा ।
तस्मादेको वायुरेव धर्मे भागवते स्थितः ॥
लक्ष्मीः सरस्वती चेति परशुक्लत्रयं श्रुतम् ।
सर्वमेतच्च कथितं तत्र तत्रामितामृना ।
व्यासेनैव पुराणेषु भारते च स्वसंविदा ॥
—इति च तत्रैव (18/26-29) ।

# दशमो विलासः

किंच श्रौते मखेयज्ञे देवानामाहुतिः श्रुता ।
उच्छिष्टाहुतिरेवांते दत्ता यत्ने कृतेऽपि च ॥ १ ॥

शिवस्य मुनिभिर्देवै ब्रह्मणा विष्णुना तथा ।
अद्यापि रुद्राहुतिदो हस्तं प्रक्षाळयेत् किल[1] ॥ २ ॥

एवं परंपराप्राप्तसमाचारं विचारय ।
समस्तयज्ञभोक्तारं हरिं सर्वसुरार्चितम् ॥ ३ ॥

पश्य मानव तस्यैवोच्छिष्टभोक्तुर्मखे मखे[2] ।
दासतैवोचिता शंभोर्न तु तत्समता क्वचित् ॥ ४ ॥

पशुः किल हरेर्यज्ञे शिवः पशुपतिस्तव ।
अतोऽपि जगदीशाग्रे पशुभूतस्य[3] का कथा ॥ ५ ॥

---

[1] अद्यापि रुद्रायोच्छिष्टाहुतिदाः श्रुतिकोविदाः ।
हस्तं प्रक्षालयंत्येतदुच्छिष्टं नेति को वदेत् ॥
—इति हरिभक्तिलतायाम् (343) ।

[2] रुद्रस्य यज्ञोच्छिष्टभोक्तृत्वं भागवते व्यक्तम् ।—
एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै ।
यज्ञस्ते रुद्र भागेन कल्प्यतामद्य यज्ञहन् ॥ (4/7/53)
यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ (9/4/8)

[3] 'अबध्नन् पुरुषं पशुम्' —इति पुरुषसूक्ते ।
विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।
अयजन् मानसे यज्ञे पितरं प्रपितामहः ॥ — इति गीताभाष्ये ।

न हि यज्ञभुजा साम्यं यज्ञे वध्यपशोर्भवेत् ।
यो यज्वनोऽपि न समः स [1]यज्ञेशसमः कथम् ॥ ६ ॥
अतो विष्णुमखे यज्वीभूय होमं च कुर्वतः ।
देवेशितुर्ब्रह्मणश्च समो नासीच्छिवस्तव ॥ ७ ॥
किमु यज्ञाधिनाथस्य सहस्रशिरसो हरेः ।
सर्वस्रष्टुः समो नेति तच्छ्रैष्ठ्यं त्वष्टमो रसः ॥ ८ ॥
ईदृशस्यापि कुमतिः कल्यावेशात् क्वचित् क्वचित् ।
किं चाधश्चुबुकाच्चापं कृत्वासीनो शिवस्तव ॥ ९ ॥
कृमिरूपधरः शक्रो धनुर्ज्यामच्छिनत् किल ।
तदा हरस्यैव धनुः पिनाको लोकपूजितः ॥ १० ॥
उत्पतन्नतिवेगेन चिच्छेद किल तच्छिरः ।
तत्क्षणात् त्र्यक्षमीशस्य मस्तकं तद्भुवः स्थळे ॥ ११ ॥

---

आयुधेषु निगीर्णेषु द्रौणिर्यज्ञं तु मानसम् ।
चक्रेऽत्मानं पशुं कृत्वा स्वात्मस्थायैव विष्णवे ॥
—इति म. भा. ता. निर्णये (28/133) ।

पुराऽमरैः कृते यस्य यज्ञे पशुपतिः पशुः ।
इति पुंसूक्त एवोक्तं सर्वेषां संमतं किल ।
एवं च यज्ञकर्तारो ब्रह्माद्या वा मखे पशुः ।
शिवो वाऽथ हरिः पूज्यो वदंतु प्रतिवादिनः ॥
—इति हरिभक्तलतायाम् (321, 322) ।

[1] यज्ञो यज्ञपतिर्यज्वा यज्ञांगो यज्ञवाहनः ।
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ —इति विष्णुसहस्रनामसु ।
अहं तु सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥ —इति गीतासु (9/24) ।

पपात किल हाहेति वादोऽभूत् सर्वतो दिशि ।
एवं च धनुषा नष्टं कष्टं प्राप्तं महेश्वरम् ॥ १२ ॥
प्रवर्ग्याख्याहुतिं दत्वा हरेः करुणया सुराः ।
यथापूर्वं कबंधेऽस्य संदधु स्तच्छिरः किल ॥ १३ ॥
कथामेतां [1]यजुर्वेदे वदंत्यद्यापि वैदिकाः ।
अजानंतं शक्रचेष्टामसर्वज्ञं तवेश्वरम् ॥ १४ ॥
नष्टं स्वस्यैव चापेन नित्यं सर्वज्ञविष्णुना ।
कथं समं वदस्यज्ञ मुखं मुद्रय संसदि ॥ १५ ॥
असंख्यासुरशस्त्रेण यस्य रोमक्षयोऽपि न ।
अजस्य शतकोट्यंडछेदे यस्य पदांगुलेः ॥ १६ ॥
नखस्यापि न विच्छेदस्तस्य स्वधनुषैव हि ।
विच्छिन्नशिरसं शंभुं कदापि न समं वद ॥ १७ ॥
अतः सर्वोत्तमो विष्णुर्वायुश्च तदनंतरम्[2] ।
अनयोरुभयोस्सर्वेऽप्यर्वाचीनाः शिवादयः ॥ १८ ॥
हरेस्तु सदृशो देवो न भूतो न भविष्यति[3] ।
शिवैकशरणा बाणरावणाद्याः क्व ते गताः ॥ १९ ॥

---

[1] 'रुद्रस्य त्वेव धनुरार्त्निः शिरः उत्पिपेष' —इति यजुर्वेदे ।
'उत्पिपेष शिरस्तस्य' —इत्यनुव्याख्याने (2/2/37) ।

[2] हरिः सर्वोत्तमः साक्षाद्रमादेवी तदंतरा ।
तदधो विधिवाण्यौ च तदधः शर्वपूर्वकाः ॥
एवं तरतमात् ज्ञेयाः सुरदैत्यनरेषु च ।
—इति भविषोत्तरपुराणांतर्गतवेंकटेशमाहात्म्ये (2/32) ।

[3] नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाभ्यहम् ॥ —इति भारते ।

हर्येकशरणान् पश्य प्रह्लादध्रुवपूर्वकान् ।
अतो दुराग्रहं त्यक्त्वा श्रुत्वा मत्वा हरेः कथाः ॥ २० ॥

लयेऽपि योऽलयस्तस्य भज पादांबुजे द्विज ।
श्लोकैरनेकैः सरसैः प्राक्[1] प्रस्तूय श्रियः पतिम् ॥ २१ ॥

श्रियं दुर्गां विधिं वायुं भारतीं च सरस्वतीम् ।
शेषं वीशं गिरीशं च पद्यैर्हृद्यैर्जगद्गुरून् ॥ २२ ॥

प्रसाद्य[2] तेषां कृपया विशुद्धमतिनाऽञ्जसा ।
विष्णोः सर्वोत्तमत्त्वाख्यं तत्त्वं बोधयितुं परम् ॥ २३ ॥

अधःकृत्य सुरान् सर्वानिदं काव्यं कृतं मया ।
यदीषदपि दोषेण स्पृष्टा न स्युः सुरा इमे ॥ २४ ॥

सदा सर्वोत्तमत्त्वं स्यात् कथं विष्णोर्विचारय ।
"विष्णोः सर्वोत्तमत्त्वं तु सर्वदा प्रतिपादय[3]" ॥ २५ ॥

इति गुर्वाज्ञया [4]खर्वीकृता शर्वादयो मया ।
श्रुतिभिः स्मृतिभिश्चैव तेषां दोषोऽपि वर्ण्यते ॥ २६ ॥

विष्णोरुत्तमतासिद्ध्यै ततस्तद्दोषवर्णनम् ।
सुराणां विष्णुभक्तानां प्रियमेव[5] न संशयः ॥ २७ ॥

अतः श्रौतमतस्थानामस्माकं तत्त्ववादिनाम्[6] ।
हरेरुत्कर्षसिद्ध्यर्थं तदन्येषां दिवौकसाम् ॥ २८ ॥

---

[1] प्राक् प्रथमे विलासे (हरिप्रियविलासे)

[2] द्वितीयविलासे ।

[3] यतिप्रणवकल्पे श्रीमदाचार्यवचनमिदम् ।

[4] खर्वं संख्यांतरे क्लीबं नीचे वामनके त्रिषु ॥ —इति मेदिनी ।

[5] अत एवोक्तं 'विलासोऽभूत् शिवप्रियः' इति (9/49)

[6] परे च तत्त्ववादेऽस्मिन् गरीयसि भरो मम ॥ —इति युक्तिमल्लिकायाम् ।

या न्यूनताऽस्ति सा वर्ण्या तेन वेदाभिमानिनः ।
तेऽप्यस्माननुगृह्णंति निगृह्णंति न कर्हिचित् ॥ २९ ॥
न चेच्छ्रुतिः कथं वक्ति दोषानेषां महात्मनाम् ।
ते च सर्वे तथाऽप्येनां मानयंति कुतो वद ॥ ३० ॥
विष्णोरुत्कर्षसिद्ध्यर्थं स्वस्वदोषानुवर्णिनीम् ।
रमाममानयन् किं न सर्वे देवाः स्वयंवरे ॥ ३१ ॥
श्रीर्माता किल लोकानां मात्रा पुष्टाः सुता वयम् ।
अतस्तदुक्तमार्गोऽयं हेतुः स्वर्गापवर्गयोः ॥ ३२ ॥
"कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।
अपराधसहस्राणामाकरं करुणाकर ॥ ३३ ॥
कृपया मां केवलया गृहाण मथुराधिप"[3] ।
इति स्वपितरि श्रीशे भक्त्या यस्तु पितामहः ॥ ३४ ॥
यद्दर्शयत् स्वदोषान्नः कुलवृद्धो गुरुः सदा ।
तस्माद्गुरूणामाचारे कुलाचारे च धीमताम् ॥ ३५ ॥
सतां वृत्तिर्यतो युक्ता तदुक्तं सूक्तमेव नः ।
किं च "[4]पत्युरसामंजस्या"दित्याह हि सूत्रकृत् ॥ ३६ ॥

---

[1] व्यक्तेयं कथा भागवते (8/8/18–22) ।

[2] विलोकयंती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ।
गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविंदत ॥ (8/8/89)
एवं विमृश्याव्यभिचारि सद्गुणैर्वरं निजैकाश्रयतया गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुंदं निरपेक्षमीप्सितम् ॥
—इति च तत्रैव (8/8/23) ।

[3] इति जितंतेस्तोत्रे( पंचरात्रागमं महोपनिषदि ब्रह्मतंत्रे श्रीमदष्टाक्षरकल्पे ।
(I/5, 6)

[4] ॐ पत्युरसामंजस्यात् ॐ । —इति ब्रह्मसूत्रम् (2/2/37) ।

असामंजस्यं च दोषास्पदत्वं कवयोः विदुः ।
[1]"जन्माद्यस्ये"ति सूत्रे या जगज्जन्मादिहेतुता ॥ ३७ ॥
उक्ता व्यासेन तामाहुर्जिज्ञास्यब्रह्मलक्षणम् ।
"स विष्णुराह ही 'त्याद्यसूत्रे[2] यः प्रस्तुतो हरिः ॥ ३८ ॥
स एवोत्तरसूत्रे[3]ऽपि ब्रह्मशब्दोदितः किल ।
तस्माज्जन्मादिहेतुत्वं विष्णोर्यल्लक्षणं पुरा ॥ ३९ ॥
सूत्रयामास सूत्रे स्वे व्यासो मतिमतां वरः ।
तस्य शैवोक्तमार्गेण शिवेऽतिव्याप्तिशंकया ॥ ४० ॥
समयान् शमयन् सर्वान् सूत्रमेतदचीक्लृपत् ।
पत्युः पशुपतेः शैव नैव जन्मादिहेतुता ॥ ४१ ॥

---

'इत्यादि श्रुतिसामर्थ्यात् पारतंत्र्यं जनिर्मृतिः ।
पराधीनपदप्राप्तिरज्ञत्वं प्रलयेऽभवः ।
प्रतीयंते सदोषत्वान्नेशः पशुपतिस्ततः ॥

—इति अनुव्याख्याने (2/2/37) ।

[1] ॐ जन्माद्यस्य यतः ॐ । —इति ब्रह्मसूत्रम् (1/1/2) ।

[2] स्वयं भगवता विष्णुर्ब्रह्मेत्येतत् पुरोदितम् ।
'स विष्णुराह ही'त्यंते देवशास्त्रस्य तेन हि ॥
आद्यंतं देवशास्त्रस्य स्वयं भगवता कृतम् ।
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमंजसा ॥
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥
देवमीमांसकाद्यंतं कृत्वा पैलमथादिशत् ।
शेषं ज मध्यकरणे........................ ॥

—इति म. भा. ता. निर्णये (10/83) ।

[3] 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते ।' —इति सूत्रे ।

नृत्यज्ञानादिभिर्दोषैर्वृतोऽसावसमंजसः ।
अतोऽस्य चैत्रवज्जन्महेतुता च न शोभते ॥ ४२ ॥

असामंजस्यं च हेतुं कृत्वा साध्यस्य सिद्धये ।
यतो मीमांसकाचार्यो व्यासो निरनयत् प्रभुः ॥ ४३ ॥

एवं च व्यासमार्गेऽस्मिन् यस्तु विद्वान् धुरंधरः ।
तस्य दोषोत्कीर्तनं च युक्तियुक्तमभूच्छिवे ॥ ४४ ॥

व्याख्याता योऽस्य सूत्रस्य दोषाख्याता कथं न सः ।
गुर्वाज्ञोल्लंघनाद्दोषो न चेन्मंद भवेन्मम ॥ ४५ ॥

इदं च ब्रह्मशक्त्यादिमतानामुपलक्षणम्[1] ।
अन्यथा तेष्वतिव्याप्तिर्लक्षणस्य भविष्यति ॥ ४६ ॥

कल्यावेशाख्यदोषो यः परशुक्लत्रये न सः ।
अपूर्णत्वास्वतंत्रत्वपूर्वदोषास्तु तेष्वपि ॥ ४७ ॥

हर्यवज्ञाऽज्ञताद्यास्ते महादोषास्तु शंकरे ।
संति तत्पक्षिणश्चैव बहवः संति दुर्जनाः ॥ ४८ ॥

अतः पशुपतिं सूत्रे निबबंध स सूत्रकृत् ।
लक्षणस्य त्वतिव्याप्तिर्न श्रियां न चतुर्मुखे ॥ ४९ ॥

नापि वायौ परे तत्त्वे शुद्धत्वस्याविरोधिना ।
पारतंत्र्याख्यालपदोषेणैव युक्ता यतस्त्विमे ॥ ५० ॥

यत् स्वतंत्रस्य कर्तृत्वं यतश्चोक्तं स्वलक्षणम् ।
जगत्कर्तृत्वमेतच्चान्यतंत्रेषु कथं वद ॥ ५१ ॥

---

[1] स्कंदसूर्यगणेशादिमतानि न्यायतोऽमुतः ।
निराकृतान्यशेषेण सिद्धांतस्याविशेषतः ॥

—इत्यनुव्याख्याने (2/2/39) ।

स च दोषो भक्तिहेतुरेव नाभक्तिकारणम् ।
ईशोऽसौ तस्य दासाश्च[1] वयमित्यनिशं मतिः ॥ ५२ ॥

येषां तेषामयं दोषो भूषणं न तु दूषणम् ।
एतेभ्यस्त्वितरे देवाः कल्यावेशात् परं हरिम् ॥ ५३ ॥

अवजानंत्यधीशं तं न जानंति क्वचित् क्वचित् ।
युज्यंते हरिणा सार्धं विध्यंति स्वायुधेन तम् ॥ ५४ ॥

अतः शुद्धत्वमेतेषां देवानां स्यात् कथं वद ।
पश्य व्यासस्य कौशल्यं यत् स्वतंत्रस्य कर्तृता ॥ ५५ ॥

अतः कृष्णवशेष्वेषु स्वोक्तलक्षणधर्मिताम् ।
दूरीचक्रे शुक्रतां तु स्थिरीचक्रे किल प्रभुः ॥ ५६ ॥

यतः पत्युरधीना या नारी शुक्तमैव हि ।
तस्माद्दोषमिमं वाचा नोवाचाल्पत्वतः किल ॥ ५७ ॥

न चेद्दुरुत्तमानेतानेवं स्पष्ट स सूत्रयेत् ।
परे हरौ विरोधाख्यमहादोषानुषंगिणम् ॥ ५८ ॥

अज्ञं च विपरितज्ञं भयंकपादिभाजनम् ।
स सूत्रे सूत्रयामास साक्षात् पशुपतिं तव ॥ ५९ ॥

उपलक्षणया दोषानल्पान् श्रीब्रह्मणोरपि ।
ऊरीचक्रेऽखिलान् दोषान् दूरीचक्रे च सूत्रकृत् ॥ ६० ॥

पक्षे हरौ स्थिरीचक्रे सर्वदोषातिदूरताम् ।
न चेदसिद्धिर्हेतोः स्यात् संदिग्धासिद्धताऽपि वा ॥ ६१ ॥

---

[1] 'दासोऽहं कोसलेंद्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहंता मारुतात्मजः ।
—इति हनुमदुक्तिः वाल्मिकि रामायणे (5/42/35) ।

यस्तु दोषातिदूरोऽस्य कथं स्याद्दोषवान् समः ।
तस्मादुत्तमतां को वा भावयेत् सूत्रभाववित् ॥
अतः सूत्रकृतः सोऽयं मतः सर्वोत्तमोत्तमः ॥ ६२ ॥
किं च शाक्तमते दोषं पृथगेव वदन्नपि ।
आह स्त्रीमात्रतः पुत्रोत्पत्त्यसंभवमेव[1] सः ॥ ६३ ॥
न तु दोषानाह चास्यां शिवे पशुपताविव ।
अतः शुक्लतमैवासीच्छक्तिः पतिमती रमा ॥ ६४ ॥
"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्[2] ।"
इति गीतोदितेनापि तथा विश्वस्य कर्तृता ॥ ६५ ॥
रमायां परतंत्रायां न भवेद्धि विचारणे ।
न ह्यन्नभांडमन्नस्य कर्तृ पाचकवद्भवेत् ॥ ६६ ॥
यद्ब्रह्मान्यस्य कर्तृत्वं व्यासस्यापि न संमतम् ।
अतश्च व्यासवाक्येऽस्मिन् न चोद्यावसरस्तव ॥ ६७ ॥
किंच युक्त्यंतरेणापि मातुः कर्तृत्ववाक् तव ।
न शोभते तां च युक्तिं वदाम्यवहितः श्रुणु ॥ ६८ ॥
"माता भस्त्रा पितुः पुत्रः" [3]इति भारतवाक्यतः ।
सृष्टिकर्ता पितैवातो लक्षणं च प्रभोरभूत् ॥ ६९ ॥
अतः सर्वेऽपि लोकेऽस्मिन् कर्मकारं वदंति तम् ।
कारुश्च कर्मकरणशीलः कर्तैव किं न सः ॥ ७० ॥

---

[1] ॐ उत्पत्त्यसंभवात् ॐ । —इति ब्रह्मसूत्रम् (2/2/42) ।

[2] 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ —इति गीतासु (14/3) ।

[3] "माता भस्त्रा पितुः पुत्र" येन जातः स एव सः ।
भरस्व पुत्रं दुष्यंत माऽवमंस्थाः शकुंतलाम् ॥"
—इति भारते (I/74/110) ।

अतः कर्ता स्वतंत्रत्वाद्धरिरेव न चापरः ।
कल्पक्षये स्वस्य कुक्षौ निक्षिप्ताः परमात्मना ॥ ७१ ॥
सर्वजीवाः सृष्टिकाले प्राप्ते सति तदिच्छया ।
सृष्टं प्राकृतशुक्लं ते प्रविष्टास्तेन[1] लीलया ॥ ७२ ॥
प्रवेशिताः श्रियः कुक्षौ तस्याः प्राकृतशोणिते ।
निमज्जिता दोहलार्द्रजले प्रक्षिप्तबीजवत् ॥ ७३ ॥
हरेरनुग्रहात् तस्या योन्याख्यद्वारमात्रतः ।
प्रसूयंते प्रजाः सर्वाः सुक्षेत्रादंकुरा इव ॥ ७४ ॥
एवं च बीजावापस्य यः कर्ता पुरुषोत्तमः ।
स एव जगतां कर्ता भवेद्धि कृषिकर्तृवत् ॥ ७५ ॥
श्रीश्च कर्तुरधिष्ठानमात्रं तस्यास्तु कर्तृता ।
न लोकसम्मता किं तु यस्य वीर्योद्भवं जगत् ॥ ७६ ॥
स एव सर्वजगतां कर्ता तद्धरिलक्षणम् ।
जगज्जन्मादिकर्तृत्वरूपं नान्यत्र कुत्रचित् ॥ ७७ ॥

---

[1] इत्यत्र स्वोदरे वायुं परिपूर्य काले काले मुंचती चर्ममयी करूणामुपकारिणी काचन सामग्री तद्वन्माता । पुत्रस्तु पितुरेवोपकारकः यस्मात् सः पितैव मातुरुदरे दत्तस्वरेतोरूपेण जातः । शुक्लांतःस्थितजीवस्य मातुरुदरप्रवेशानंतरं जीववारकं तदेव शुक्लं मातृभुक्तान्नरसादिना देहाकारेण परिणतं भवति । शोणितं तु सरोजस्य पंकिलं सरोजलमिव आधारमात्रमिति भावेन स एवेत्युक्तम् । यथा कारुपूरितभस्त्रानिःसृतो वायुः कारोरेवोपकारकः तथेति भावः । —इति महाभारतलक्षालंकारे ।

........स विष्णुनामा श्रियमाप सृष्टये ।
सुषाव सैवाण्डमधोक्षजस्य शुष्मं हिरण्यात्मकमंबुमध्ये ॥

—इति म. भा. ता. निर्णये (3/23) ।

यतः पितैव पुत्रस्य कर्ता तत् पितुरेव सः ।
भस्त्रोपमा तु या भार्या सा कर्ता (कर्त्री)न कथंचन ॥ ७८ ॥
पितुरौदर्यवीर्यं हि पुत्रदेहो न चापरः ।
अतस्तद्देहकर्ताऽपि पिताऽभूत् कुंभकारवत् । ॥ ७९ ॥
मृद्वद्वीर्यं तस्य शालोपमासीज्जननी तु या ।
एवं च हरिरेवाभूत् कर्ता ब्रह्मादिदेहकृत् ॥ ८० ॥
कारणं वीर्यमेवासीदधिष्ठानमभूद्रमा ।
सूत्रस्य कर्ता यो व्यासः स कर्ता भारतस्य च[1] ॥ ८१ ॥
अतस्त्वत्रोदितो योऽर्थः सूत्रार्थोऽपि स एव हि ।
एवं च लक्षणस्यास्य क्वातिव्याप्तिर्विचार्यताम् ॥ ८२ ॥
किं च पुंसूक्तमार्गेण[2] चक्षुःश्रोत्रमुखैः स्वकैः ।
पद्भ्यां भुजाभ्यामूरुभ्यां नाभेरास्याच्च मस्तकात् ॥ ८३ ॥
यदा सृजति चंद्रेंद्रसूर्याग्निश्वसनादिकान् ।
विप्रक्षत्त्रादिवर्णांश्च लोकान् पाताळपूर्वकान् ॥ ८४ ॥

---

[1] सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार ।
तच्छुश्रुवुर्ब्रह्मगिरिगीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ॥
समस्तशास्त्रार्थविनिर्णयात्मकं चक्रे **महाभारत**नामधेयम् ॥
— इति म. भा. ता. निर्णये (10/58, 59) ।

[2] ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥
चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत ॥
नाभ्या आसीदंतरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां अकल्पयन् ॥ इति पुरुषसूक्ते ।

तदा रमाविधीशादेः कर्तृताशाऽपि ते गता ।
विनाऽपि यान् भवेत् कार्यं तेषां कारणतैव न ॥ ८५ ॥

स्वतंत्रकारणत्वाख्यकर्तृत्वं त्वष्टमो रसः ।
अन्वयव्यतिरेकाभ्यां यद्व्याप्तं तद्धि कारणम् ॥ ८६ ॥

एवं च शोभते विष्णोरेव सर्वस्य कर्तृता ।
तत्सौत्रलक्षणं सर्वदुर्वादिमतशिक्षणम् ॥ ८७ ॥

तद्व्यासवचसां भावं तच्छिष्यो वेत्ति भाष्यकृत्[1] ।
यस्तत्त्ववादिनां साक्षादाचार्यो मध्वनामकः ॥ ८८ ॥

वादिराजकृते श्राव्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूद्धरिप्रियः ॥ ८९ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचितसरसभारतीविलासे दशमो विलासः ॥

— o —

---

[1] गीतार्थं वक्ष्यामि लेशतः । —इति गीताभाष्ये ।

बहुभिर्व्याख्यातृभिर्भगवद्गीतायाः व्याख्यातत्वात् व्यर्थमिदं भाष्यमित्याशङ्कानिरसनं प्रयोजनमस्य । अन्यैः स्वपक्षनिक्षिप्तदृष्टिभिः स्वाभिप्रायो भगवद्गीतार्थत्वेन आरोप्योक्तः । अहं तु गीतार्थमेव वक्ष्यामीति सूचनात् । —इति प्रमेयदीपिकायाम् ।

मायावादतमोव्याप्तमिति तत्त्वदृशा जगात् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ॥ —इति उपाधिखण्डने ।

इति सर्वज्ञमुनिना मायावादतमोऽखिलम् ।
निरस्तं तत्त्ववादेन सतां संशयनुत्तये ॥ —इति मायावादखण्डने ।

# एकादशो विलासः

किंच विस्तृत्य स्त्रोक्तदोषान् वच्मि शिवे तव ।
ग्रंथे भागवते तेन व्यासेनैव प्रपंचितान् ॥ १ ॥
निजशक्तिं भाविकार्यं रक्षःप्रकृतिमेव च ।
स्वतोऽप्रतिक्रियामन्यदेवेभ्यश्चाप्रतिक्रियाम् ॥ २ ॥
पूर्वं[1] सर्वेष्व(श)शक्तिं चाजानन् पशुपतिः शिवः ।
वृकासुरायात्मशोककरं वरमदात् किल ॥ ३ ॥
ततोऽतिभीतो यातोऽपि त्रिशूली सर्वतो दिशः ।
त्रातारं क्वाप्यलब्ध्वांऽते श्रीकांतं शरणं गतः ॥ ४ ॥
रक्षो हत्वाऽथ भक्तं तं ररक्ष किल केशवः ।
जातमात्रशिशुर्योऽसावरोदीत् पितरं प्रति ॥ ५ ॥
"नामानि कुरु मे धातः स्थानानि च जगद्गुरो[2] ।"
तस्य रुद्रस्य लोभाख्यदोषो ह्याजानजोऽभवत् ॥ ६ ॥
अहंकाराख्यतत्त्वाभिमानाज्जनपूजनात् ।
महादेवाख्यनाम्ना च मदोत्कलितचेतसः ॥ ७ ॥

---

[1] स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ।
स्वहस्तं धातुमारेभे सोऽबिभ्यत् स्वकृताच्छिवः ॥
तेनोपसृष्टः संत्रस्तः पराधावन् सवेपथुः ।
यावदंतं दिवो भूमेः काष्ठानामुदगादुदक् ॥
अजानंतः प्रतिविधिं तूष्णीमासन् सुरेश्वराः ।
ततो वैकुंठमगमद् भास्वरं तमसः परम् ॥
—इति भागवते (10/88/23-25) ।

[2] भागवतवचनम् (3/8/20) ।

वम्रीरूपेंद्रदुष्कर्माहंमतेरविजानतः ।
करस्थस्वधनुष्कोट्या शिरश्छेदान्मृतस्य च ॥ ८ ॥
प्रवर्ग्याहुतितुष्टेन विष्णुनोज्जीवितस्य च ।
ससैन्यं रावणं हत्वा रामे राजति भूतले ॥ ९ ॥
ब्रह्मरुद्रादयो[1] देवास्तं मानयितुमागताः ।
तदा स्वदत्तवरतः सर्वैरप्यजितं खलु ॥ १० ॥
हतवानिति शर्वोऽसौ सर्वेशे कृतमत्सरः ।
धनुरादाय युद्धायाजुहाव किल राघवम् ॥ ११ ॥
कटाक्षक्षेपमात्रेण स्थाणुं चक्रे हरं हरिः ।
इति रामायणकथा[2] यच्छ्रुता तेन मत्सरी[3] ॥ १२ ॥
गिरीश इति सर्वेषां विदुषामपि संमतम् । ॥ १३ ॥
स वै रुरोद देवानां पूर्वजो भगवान् भवः ।
"नामानि कुरु मे धातः स्थानानि च जगद्गुरो" ॥ १४ ॥
इति भागवते स्पष्टमुक्तत्वाद्धनलोभतः ।
यद्रुरोद ततो रुद्रो[4] जन्मप्रभृतिलोभवान् ॥ १५ ॥

---

[1] तस्मिन् हते त्रिजगतां परमप्रतीपे ब्रह्मा शिवेन सहितः सह लोकपालैः ।
अभ्येत्य पादयुगलं जगदेकभर्तू रामस्य भक्तिभरितः शिरसा ननाम ॥
—इत्यादि म. भा. ता. निर्णये (8/212–218) ।

[2] म. भा. ता. निर्णये (8/219–221)

[3] 'अप्रीतिर्मद्विशो नायं इति मत्सर ईरितः ।'
इति भागवततात्पर्योद्धृत शब्दनिर्णयवचनम् ।

[4] यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः ।
अतस्त्वामभिधास्यंति नाम्ना रुद्र इति प्रजाः ॥
—इति भागवते (3/12/10) ।

'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' । —इति च श्रुतिः ।

मत्सरात् कुत्सितमनेर्लोमाद्रोदनकारिणः ।
क्रोधाद्दक्षशिरश्छेत्तुः कामाद्धौर्यवदेहिनः ॥ १६ ॥
मोहिनीस्त्री(मोहान्नृस्त्री)पृष्ठयात्रामात्रेण स्रुतरेतसः[1] ।
इतोऽपि प्राग्जितेनैव कामेन विजितस्य च ॥ १७ ॥
शोधायाभ्यागतमुनेर्वधायोद्यतशूलिनः ।
साक्षात् स्वस्य पितुर्मस्तकच्छेदादाततायिनः[2] ॥ १८ ॥
स्मशानचारिणो नित्यं नृकपालकरस्य च ।
"नारीसंगममत्तोऽसौ यस्मान्मामवमन्यते ॥ १९ ॥
योनिलिंगस्वरूपं वै तस्मादस्य भविष्यति ।"
इति पाद्मपुराणोक्तभृगुशापस्य साहसम् ॥ २० ॥
पश्यंतु पंचशीर्षाणि भुजानां च चतुष्टयम् ।
द्वौ पादावुदरं वक्षः कटिश्चोरू च धूर्जटेः ॥ २१ ॥
विच्छिद्य तत्क्षणादेव पेतुः किल महीतले ।
शिश्नमात्रं चोर्वरितं तच्च योन्यां निवेशितम् ॥ २२ ॥
अत्र प्रमाणं शैवानां कंठे कंठे विलंबिनी ।
लिंगमालैव या नित्यं कंठे वामे प्रपूज्यते ॥ २३ ॥

---

[1] तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ।
प्रत्यपद्यत कामेन वैरिणैव विनिर्जितः ॥
तस्यानुधावतो रेतश्चस्कंदामोघरेतसः ।
शुष्मिणो यूथपस्येव वासितामनुधावतः ॥
—इति भागवते (8/12/31)

[2] अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते ह्याततायिनः ॥ —इति भारते (6/107/110)

एवं च हरिभक्तस्य भृगोरद्भुततेजसः ।
शापच्छिन्नाखिलांगस्य लिंगाकारधरस्य च । ॥ २४ ॥
वरं दत्वा मारकस्य दुराचारिप्रियस्य च ।
विषेण नीलग्रीवस्य[1] विषादान्मेषरूपिणः ॥ २५ ॥
"मेषरूपशिवत्राते"[2]त्युक्तो यो नरकेसरी ।
जुगोप किल यन्मेषरूपशंकरवाहनः[3] ॥ २६ ॥
योगिनीग्रस्तगिरिशं[4] तस्य स्त्रीरूपशक्तिभिः ।
पराजितस्य त्रातस्य हरिणा करुणावता ॥ २७ ॥

---

[1] ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥
तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥

—इति भागवते (8/7/42, 43) ।

नीलोऽस्य गलस्तदासीत् । —इति च म. भा. ता. निर्णये (10/15) ।

[2] रुद्रो नारायणो **मेषरूपशंकरवाहनः** ।

[3] **मेषरूपशिवत्राता** दुष्टशक्तिसहस्रभुक् ॥—199

[4] **योगिनीग्रस्तगिरिशत्राता** (190)

—इति पद्मपुराणे वासुदेवसहस्रनामासु ।

........इत्यादि नामार्थपर्यालोचनया एकासृग्बिंदुपातमात्रेण कोट्यधंकीभवतोऽधकस्यासृक्पानाय सृष्टशक्तिसहस्रस्य नृसिंहरूपदयैव कृतांधकहननस्य पुनरसृगासक्तचित्ततया स्वस्यैव भक्षणायोद्युक्तनृहरिदत्तसत्वयोगिनीभयेन मेषेषु मेषीभूतमात्मनं च ग्रसितुकामां तां नाशयितुं पातालादागतेन चिंतामणिनृसिंहेण मेषरूपं च वाहनीकृत्य कृतस्यात्मरक्षणस्य योगिनीहननाख्यमहाशौर्यस्य साक्षाच्छिवेनैव दृष्टत्वात् ।....

—इत्यादि तीर्थप्रबंधव्याख्याने (2/45) ।

योग्यायोग्यं तथा कार्याकार्यं चाप्यविजानतः ।
नाममात्रान्महेशस्य नाम्ना मृत्युंजयस्य च ॥ २८ ॥
वेपमानस्य मरणशंकया दिक्षु धावतः ।
चलत्त्रिशूलहस्तस्य गले लोलत्पिनाकिनः ॥ २९ ॥
स्रंसत्कपर्दबंधस्य संत्रस्तस्य पदे पदे ।
असमंजसता[1] त्वस्य किं वाच्या शोच्यकर्मणः ॥ ३० ॥
[2]रुद्रानुद्रुतदुर्दैत्यमर्दनायोद्यतस्य च ।
न्यस्तहस्तगशस्त्रस्य भृत्यकृत्यानुपेक्षिणः[3] ॥ ३१ ॥
भृगोरागा(गोऽ)नुकूलस्य यो विष्णौ क्रोधजिष्णुताम् ।
आघोषयितुमागच्छद्विबुधाधिक्यसिद्धये ॥ ३२ ॥
मदांधजनदूरस्य वधूकर्णच्छिदो[4] वने ।
भक्ताय दत्तराज्यस्य[5] पार्थसारथ्यकारिणः ॥ ३३ ॥

---

[1] ॐ पत्युरसामंजस्यात् ॐ । —इति ब्रह्मसूत्रम् (2/2/37) ।

[2] एतावत्पर्यंतं रुद्रस्यासामंजस्यमुक्त्वा अधुना विष्णोः सामंजस्यं मुपपादयति । रुद्रेत्यादिभिः । तद्धि सकलशास्त्रमहातात्पर्यम् । 'अशेषगुणपूर्णत्वं सर्वदोष समुज्झितिः । विष्णोरन्यस्य तत्तंत्रमिति सम्यग्विनिर्णयः । (अनु.)

[3] ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ।
—इति भागवते (9/4/48) ।

[4] तां तत्र हास्यकथया जनकासुताग्रे गच्छानुजं म इह मेति वचः स उक्त्वा ।
तेनैव दुष्टचरितां हि **विकर्णनासां** चक्रे समस्तरजनीचरनाशहेतोः ॥
—इति म. भा. ता. निर्णये (5/26) ।

[5] ....रक्षःपतेरवरजस्य ददौ स लंकाम् ।
कल्पांतमस्य निशिचारपतित्वपूर्व-
मायुः प्रदाय निजलोकगतिं तदंते ॥ —इति म. भा. ता. निर्णये (8/9) ।

अगण्यरक्षःशस्त्रेभ्योऽप्यनिर्भिन्नत्वचो हरेः ।
अजांडभंगेऽप्यक्षुण्णराजन्नखशिखस्य च ॥ ३४ ॥
द्विधा[1] वनाग्निपानेनाप्यदग्धरसनस्य च ।
सर्गस्थित्यंतकरणेऽप्यनहंकृतचेतसः ॥ ३५ ॥
असंख्यासुरसंहारेऽप्यघलेशोज्झितस्य च ।
'न तत्र सज्यस' इति स्मृतिगीतसुकर्मणः ॥ ३६ ॥
सुधां प्रसाध्य देवेभ्यो दत्वा तृप्तिमुपेयुषः ।
शिष्टेष्टदस्य नियमाद्दुष्टानां नष्टिदस्य च ॥ ३७ ॥
मिथ्यामत्य(गत्य)तिदूरस्य नित्यतृप्तांतरात्मनः[2] ।
लयेऽपि लयहीनस्य शयानस्य श्रिया सह ॥ ३८ ॥
प्रागभावबहिर्भावात् सृष्टौ जन्मोज्झितस्य[3] च ।
स्तंभसंभूतनरहर्यक्षस्याक्षोभ्यतेजसः ॥ ३९ ॥

---

[1] तां रात्रिमत्र निवसन् यमुनातटे स
दावाग्निमुद्धतबलं च पपौ व्रजार्थे ।
—इति म. भा. ता. निर्णये (13/43) ।

वह्निं पपौ पुनरपि प्रदहंतमुच्चै-
र्गोपांश्च गोगणमगण्यगुणार्णवोऽपात् ॥
—इति च म. भा. ता. निर्णये (13/58) ।

[2] 'ॐ आत्मनि चैवं विचित्राश्च हि ॐ' (2/1/29) । 'ॐ सर्वधर्मोपपत्तेः ॐ' (2/1/38) । ॐ अधिकं तु भेदनिर्देशात् ॐ (2/1/23) । ॐ सर्वोपेता च तद्दर्शनात् ॐ (2/1/31) ।—इत्यादि ब्रह्मसूत्राणि चात्र मानम् ।

[3] 'ॐ असंभवस्तु सतोऽनुपपत्तेः' ॐ —इति ब्रह्मसूत्रम् (2/3/91) ।
'अनुत्पत्तिरेव सतः'............
"प्रत्यक्षत्वं हरेर्जन्म न विकारः कथंचन ।" —इत्यादि तद्भाष्यम् ।

गर्भाद्बहिर्निर्गमेऽपि शंखचक्रांकधारिणः[1] ।
स्वमूलरूपवक्षःस्थश्रीवत्सांकोज्ज्वलोरसः ॥ ४० ॥
उदरस्थजगज्जालशिशुरूपधरस्य[2] च ।
भूदेवीहितकृद्रूपमादायोर्ध्वमुपेयुषः ॥ ४१ ॥
निरनिष्टस्य[3] सततं निरवद्यस्य च प्रभोः ।
अस्माकं नृहरेः सर्वविस्मापनपराक्रमम् ॥ ४२ ॥
अक्रोधतामकामित्वमलोभमनहंकृतिम् ।
खलहृच्छल्यकौशल्यमकुतोभयतां तथा ॥ ४३ ॥
स्वतः सर्वज्ञतां चैव सदाश्रितहिते[4] रतिम् ।
वटुरूपस्य पटुतां चाटुवाक्येषु चाटुताम् ॥ ४४ ॥

---

[1] तमद्भुतं बालकमंबुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीतांबरं सांद्रपयोदसौभगम् ॥
—इति भागवते (10/3/9) ।

[2] तावच्छिशोर्वै श्वसितेन भार्गवः सोंऽतः शरीरं मशको यथाऽविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥
खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥
महांति भूतान्यथ भौतिकान्यसौ कालं च नानायुगकल्पकल्पनम् ।
यत् किंचिदन्यद् व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥
—इत्यादि मार्कण्डेयकथाप्रसंगे (भागवते—12/9/27-29) ।

[3] 'निरनिष्टो निरवद्यः'
—इति श्रुतिः ।

[4] भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टौ
ईक्षा बभूव परनामनिमेषकांते ॥ —इति म. भा. ता. निर्णये (1/3) ।

किं ब्रूमः स्त्र्यंबकस्यापि यं ब्रुवंति परायणम् ।
ब्रह्माब्दशतपर्यंतं भूम्या रम्यश्रिया लये ॥ ४५ ॥
रहस्यालिंगितांगोऽपि वटपत्रपुटे प्रभुः ।
योऽस्खलन्निजवीर्योऽभूत् तस्य वीर्यच्युतिः कदा ॥ ४६ ॥
अमोघवीर्यस्य हरेर्यदि वीर्यं स्खलेत् तदा ।
मनोहराः कुमाराश्च लयेऽपि स्युरनेकशः ॥ ४७ ॥
तदा कामः [1]क्व कामस्य शराः क्व मदकारिणः ।
कार्याभावे कारणस्याप्यभावो यदि नोच्यते ॥ ४८ ॥
तदा घटोऽपि ज्ञानी स्यात् तटाकाज्जलमाहरेत् ।
अतः कारणशून्यस्य कार्यस्य च न कल्पना ॥ ४९ ॥
शोभते कार्यशून्यं च कारणं नैव कल्पयेत् ।
एवं च कामिनीकामः कामाभावे कथं वद ॥ ५० ॥
पुत्राभावे च को रेतःप्रच्युतिं कल्पयेद्वद ।
तदालयादा च सृष्टेर्यस्य कामो न चेतसि ॥ ५१ ॥
श्रिया सह शयानस्याप्यस्य न क्वापि विक्रियाम् ।
कल्पयेत् सृष्टिकालेऽपि यतो दृष्टानुसारिणी ॥ ५२ ॥
कल्पनेति वदंत्यार्या यद्यदृष्टं च कल्प्यते ।
तदा शृंगद्वयं च स्यात् पशुवत् तव मस्तके ॥ ५३ ॥

---

[1] प्रलये कामाभावस्तु—

वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शंकरः ।
नेंद्रसूर्यौ न च गुहो* न सोमो न विनायकः ।"

—इति तत्त्वनिर्णयोदाहृतश्रुतिसिद्धः ।

---

* गुहः— कामः–प्रद्युम्ननामाऽभवदेवमीशात् स स्कंदतामाप स चक्रतां च ।
—इति म॰ भा॰ ता॰ निर्णयवचनात् (3/75) ।

लये सति स्वोदरस्थं जगत्सर्वं जनार्दनः ।
स्वयमेव बहिष्कृत्य क्षिपेन्मूर्त्यंतरोदरे[1] ॥ ५४ ॥
सा च मूर्तिर्विना भार्यायोनिद्वारं निजेच्छया ।
गुणत्रयेण प्रकृतेर्यथापूर्वं सृजेत् किल ॥ ५५ ॥
स इदं सर्वमसृजतेत्याद्युपनिषत् स्फुटम् ।
इत्थमाह मुखादिंद्रश्चाग्निश्चंद्रस्तु मानसात् ॥ ५६ ॥
चक्षोः सूर्यः प्राणतश्च वायुः पद्भ्यामभूच्च भूः ।
इति यं स्तौति पुंसूक्तं तस्य सृष्टिर्न रेतसा ॥ ५७ ॥
किंच सर्वस्य पितरं यस्तु नाभेश्चतुर्मुखम् ।
नागभोगे पद्मनाभः शयानः सह भार्यया ॥ ५८ ॥
मनोज्ञया सर्वसंपद्रूपिण्या दोषदूरया ।
उपेक्ष्य तां स्वशक्त्यैव ससर्ज न तु रेतसा ॥ ५९ ॥
कुक्षौ निक्षिप्ततत्त्वानामंशान् वीर्यात्मना प्रभुः ।
परिणाम्य पुनर्लक्ष्म्याः कुक्षौ निक्षिप्य लीलया ॥ ६० ॥
तस्या योनिमुखेनैव बहिष्कृत्य हिरण्मयम् ।
तत्त्वानामंशरूपं तद्वीर्यं तेनैव भास्वरम् ॥ ६१ ॥

---

[1] स्थित्वा स्वमूर्तिभिरमूभिरचिंत्यशक्तिः प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात् ।
निर्देहकान्स भगवाननिरुद्धनामा जीवान्स्वकर्मसहितानुदरे निवेश्य ।
चक्रेऽथ देहसहितान् क्रमशः स्वयंभूप्राणात्मशेषगरुडेशमुखान् समग्रान् ॥
—इति म. भा. ता. निर्णये (1/9) ।

सुषाव सैवांडमधोक्षजस्य शुष्मं हिरण्यात्मकमंबुमध्ये ।
तस्मिन् प्रविष्टा हरिणैव सार्धं सर्वे सुरास्तस्य बभूव नाभेः ॥
—इत्यादि म. भा. ता. निर्णये (9/23) ।

अजांडं निर्ममे हैमं न तु विष्णुः स्वरेतसा ।
मृदा कुंभं कुंभकार इव तत् क्वास्य विक्रिया ॥ ६२ ॥
"परेण विशता स्वस्मिन् मात्रया विश्वसृग्गणः ।
चुक्षोभान्योऽन्यमासाद्य यस्मिन् लोकश्चराचरः"[1] ॥ ६३ ॥
"प्रवुद्धकर्मा दैवेन त्रयोविंशतिको गणः ।
प्रेरितोऽजनयत् स्वाभिमात्राभिरपि पूरुषम्"[2] ॥ ६४ ॥
इति भागवते स्पष्टं तत्त्वमेतदुदीरितम् ।
चोदिता[3] निजवीर्येणेत्याहान्यत्र च स प्रभुः ॥ ६५ ॥
ईदृशस्य प्रभोः कृष्णरामाद्याकृतिधारिणः ।
या पुत्रसृष्टिः सा चास्य मनसा न तु रेतसा ॥ ६६ ॥
आदिसृष्टिश्च महती न यस्य निजरेतसा ।
तस्य तुच्छामिमां सृष्टिं को वदेन्निजरेतसा ॥ ६७ ॥
यदि रेतोमयी सृष्टिः कृष्णस्य द्वारकापुरे ।
तर्हि षोडशसाहस्रपत्नीष्वेकैकशः प्रभोः ॥ ६८ ॥
पुत्रा [4]दश दशैवासन् न न्यूना नाधिकाः कुतः
आदिपुंसो यश्च[1] कृष्णकेशस्तस्य पराक्रमम् । ॥ ६९ ॥

---

[1] भागवतवचनमिदम् (3/7/5) ।

[2] इदमपि भागवतवचनम् (3/7/4) ।

[3] स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत् ॥
—इति भागवते (1/10/22) ।

[4] पृथक् पृथक् तासु दशैव पुत्रकानधत्त कन्यामपि सर्वशः प्रभुः ।
— इति म. भा. ता. निर्णये (20/140) ।

विचारयंतु विद्वांसस्तस्य वीर्यसमुद्भवाः
पुत्राः स्युर्यदि सांबाद्याः प्रद्युम्नाद्यास्तथाऽपरे । ॥ ७० ॥
यो रक्षसा बलान्नीतस्तस्य गेहे स्वभार्यया
पोषितश्च[2] तया विद्यां[3] दत्वांऽते मोचितः किल । ॥ ७१ ॥
यश्च दुर्योधनपुरे बलाद्बद्धः स्वयंवरे
रामस्य तेजसैवांते मोचितो न स्वशक्तितः । ॥ ७२ ॥
ईदृशा दुर्बलाः पुत्राः कथं पुंशक्तिरूपिणा
वीर्येण निर्मितास्तस्मात् सेयं सृष्टिश्च मानसी । ॥ ७३ ॥
अनिर्दशस्य बालस्य कृष्णस्य वरयोषिताम्
संगेन वीर्यस्खलनं को मेधावी प्रकल्पयेत् । ॥ ७४ ॥

---

एकैकशस्ताः कृष्णस्य पुत्रान् दश दशाबलाः ।
अजीजनन्ननवमान् पितुः सर्वात्मसंपदा । —भागवते (10/61/1)

[1] यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ।
दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि ॥
—इत्यनुव्याख्याने (1/1/12) ।

सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥
— इत्यादि गीतातात्पर्यनिर्णये (13/14) ।

[2] रसायनैः कुमारकं व्यवर्धयद्रतिः पतिम् ।
सुपूर्णयौवनोऽभवच्चतुर्भिरेव वत्सरैः ॥
—इति म. भा. ता. निर्णये (17/191) ।

[3] ददौ च मंत्रमुत्तमं समस्तमायिनाशकम् ।
भृगूत्थरामदैवतं रतिर्हरेः सुताय च ॥
—इति म. भा. ता. निर्णये (17/194) ।

स्वरूपांशास्तु मत्स्याद्या यथा स्युः कृतकौतुकाः
सर्वज्ञाः सर्वशक्ताश्च सर्वदैत्यभयंकराः । ॥ ७५ ॥

इमे सुताश्च तद्वत् स्युर्यदि वीर्यसमुद्भवाः
अतो हरेः कामरूपदोषोऽभूदष्टमो रसः । ॥ ७६ ॥

सयुक्तिकां शुकोक्तिं च पश्य नश्यतु ते भ्रमः
[1]"*वाचं दुहितरं तन्वीं स्वयंभूर्हरतीं मनः"[2] । ॥ ७७ ॥

अकामां चकमे क्षत्तः सकाम इति नः श्रुतम्
[3]तमधर्मे कृतमतिं विलोक्य पितरं प्रजाः । ॥ ७८ ॥

"मरीचिमुख्या ऋषयो विस्रंभात् प्रत्यषेधयन्"[4]
"तत्सृष्टत्सृष्ठ(ष्टि)सृष्टेषु कोन्वखंडितधीः पुमान् । ॥ ७९ ॥

ऋषिं नारायणमृते योषिन्मय्येव मायया"[5]
नारीणां दशसाहस्री कामस्य भ्रमकारिणी । ॥ ८० ॥

यस्य शौचोदकाहर्त्री कर्त्री च विविधाः क्रियाः
न कदापि मनोहर्त्री बभूव जितचेतसः । ॥ ८१ ॥

---

[1] भगवन्महत्त्वविद्भिर्महद्भिरसुरजनमोहनं कर्तव्यमिति नियममवेक्षमाणस्य ब्रह्मणः कामिजनविडंबनप्रकारमाह । **वाच**मिति ।

—इति विजयध्वजीयटीकायाम् ।

[4] भगवदुपासनया तेन तत्र नित्यसन्निहितमनस्काददुष्टमनसः स्वयंभुवो दुष्टजनमोहनरीतिमाह । **त**मिति । —इति विजयध्वजीयटीकायाम् ।

[2] *भागवते (3/13/28) । [3]भागवते (3/13/29) ।

[5] भागवते (3/31/37) ।

---

* यां तत्याज विभुर्ब्रह्मा मानुषी वाक् च सा स्मृता ।
सरस्वती निजा भार्या देवीं वाचं तु तां विदुः ॥—इति भागवत तात्पर्य ।

पादसंवाहनस्यैव कर्त्री श्रीश्च द्विरुदिर्णा
तस्य चित्तापहाराय शक्ता स्त्री क्व जगत्त्रये ।[1] ॥ ८२ ॥

सामंजस्यं चास्य विष्णोः किं वाच्यं पूज्यकर्मणः
अतो [2]जिज्ञास्यता विश्वकर्तृता[3] शास्त्रयोनिता[4] । ॥ ८३ ॥

अस्यैव शोभते नान्यस्येति व्यासो महामतिः
सूत्रे सूत्रे सूत्रितवान् हरेः सुगुणसन्मणीन् । ॥ ८४ ॥

दुर्वादिमर्कटैर्नीतां रत्नमालामिमां बलात्
आहृत्यास्मद्गुरुर्मध्वः कंठे कंठे न्यधात् सताम् ॥ ८५ ॥

वादिराजकृते श्राव्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूद्धरिप्रियः ॥ ८६ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचितसरसभारतीविलासे एकादशो विलासः ॥

— ० —

---

[1] उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम् ।
संमुह्य चापमजहात् प्रमदोत्तमास्ता यस्येंद्रियं विमथितुं कुहकैर्न शेकुः ॥
— इति भागवते (1/11/36) ।

स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ।
पत्न्यस्तु षोडशसहस्रमनंगबाणैर्यस्येंद्रियं विमथितुं करणैर्न शेकुः (विभ्वः) ॥
—इति भागवते (10/61/4) & (11/6/18)

[2] ॐ अथातो ब्रह्मजिज्ञासा ॐ । (1/1/1)

[3] ॐ जन्माद्यस्य यतः ॐ । (1/1/2)

[4] ॐ शास्त्रयोनित्वात् । (1/1/3)

# द्वादशो विलासः

शुकरूपस्य या स्वस्य पित्रा सूत्रकृतोदिता ।
असमंजसता शंभोरपि चित्तप्रियैव[1] सा ॥ १ ॥

यो गुरुर्वेदविदुषां यो गुरुः सर्वदेहिनाम्[2] ।
तस्य व्यासस्य मर्यादामंगीकार्यां सुरैरपि ॥ २ ॥

मन्यामहे न चेज्ज्ञानशून्यं स्यात् सकलं जगत् ।
योऽष्टादशपुराणानां कर्ता[3] वक्ता श्रुतेरपि ॥ ३ ॥

तस्य मार्गो हरस्यापि प्रियः स्वर्गापवर्गदः ।
"[4]नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ॥ ४ ॥

किंचित् तदन्यथाजातं त्रेतायां द्वापरेऽखिलम् ।
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ॥ ५ ॥

संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ॥ ६ ॥

तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ॥ ७ ॥

---

[1] तथाचोक्तं भागवते शंकरमोहनप्रसंगे (8/12/42, 43)—

आत्मांशभूतां तां मायां भवानीं भगवान् भवः ।
शंसतामृषिमुख्यानां प्रीत्याऽचष्टाथ भारत ॥
अपि व्यपश्यत्स्वमजस्य मायां परस्य पुंसः परदेवतायाः ।
अहं कलानामृषभोविमुह्ये यथाऽवशोऽन्ये किमुतास्वतंत्राः ॥ —इत्यादि ।

[2] तमेव शास्त्रप्रभवं प्रणम्य **जगद्गुरूणां गुरु**मंजसैव ।
**गुरुर्गुरूणां** प्रभवः शास्त्राणां बादरायणः ॥ —इत्यनुव्याख्याने ।

[3] अष्टादशपुराणानां कर्ता सत्यवतीसुतः । —इति पुराणवचनम् ।

[4] श्लो. (4–11) ब्रह्मसूत्रभाष्योद्धृतस्कांदपुराणवचनानि ।

उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ।
चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः ॥ ९ ॥
शतधा चैकधा चैव तथैव च सहस्रधा ।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ॥ ८ ॥
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमंजसा ।
एवं विधानि सूत्राणि कृत्वा व्यासो महायशाः ॥ १० ॥
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः" ॥ ११ ॥
इति स्कांदपुराणोक्तेः सूत्रे मुख्याधिकारिणः ।
सोऽयं सूत्रोदितो न्यायो हरस्यैव मनोहरः ॥ १२ ॥
यथा बलवता विष्टिगृहीतो भुवि मानवः ।
नाकर्तुमीष्टे भगवान् स्वातंत्र्यान्न तथा किल ॥ १३ ॥
तेनाकर्तुं शक्तता या साऽपि विष्णोर्महान् गुणः ।
तस्मादकर्तुं किं शक्त्या शिशोः कुशपशोरिव ॥ १४ ॥
इति मंदमतीनां या शंका साऽपि बहिर्गता ।
यतो यत्ने महति च कृते मुक्तिकृते खलैः ॥ १५ ॥
न क्वापि कुरुते कृष्णः[1] ततोऽकर्तुं च शक्तता ।
तस्यैवास्ति स्वतंत्रस्य न त्वन्येषां दिवौकसाम् ॥ १६ ॥
वरं ददति येऽन्ये(स्वे)षामेवांते भयकारिणाम् ।
हिरण्यकवृकादीनां नाकर्तुं शक्तताऽस्ति तत् ॥ १७ ॥

---

[1] भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां स कथंचन स्यात् ।
उत्साहयुक्तस्य च तत्प्रतीपं भवेद्धि राहोरिव दुःखरूपम् ॥
—इति म. भा. ता. निर्णये (10/35) ।
"अवैष्णवानां यतनै र्न मोक्षः । —इति रुग्मिणीशविजये (2/50) ।

तेषां सुराणां विष्णोः सा शक्तिस्त्वस्त्युक्तवर्त्मना ।
अवध्यतावरोपेतानपि वध्यान् करोति यः ॥ १८ ॥
विषं च दत्तं राक्षस्या योऽमृतीकृतवान् प्रभुः ।
शिशुश्च धत्ते यो गर्भे विश्वमेतच्चराचरम्[1] ॥ १९ ॥
वरं च दुस्तरं सर्वैर्हिरण्यकशिपोः पुरा ।
अन्यथा कृतवान्नारसिंहरूपी महाबलः ॥ २० ॥
अन्यथा कर्तुमप्येष एव शक्तो न चापरः ।
यो विषान्नीलकंठोऽभूद्वरं दत्वाऽऽप संकटम् ॥ २१ ॥
तमः पराक्रमं चैव यो विधिर्नान्यथाकरोत् ।
ब्रह्महत्याभयात् पद्मनालांतरविशच्च यः[2] ॥ २२ ॥
यो लीलया जगच्चक्रे यो दधार च लीलया ।
यो नियुंक्तेऽखिलं साक्षीभूय चराचरम् ॥ २३ ॥
दोषे सत्यपि भक्तौघं नित्यमुक्तं करोति यः ।
अवतीर्य खलानीकं यो निहंति युगे युगे[3] ॥ २४ ॥
अंते निहंति यः सर्वं चिंतासंतापवर्जितः[4] ।
अस्यैव शोभते कर्तुं शक्तता चित्रकर्मणः ॥ २५ ॥

---

[1] साऽडं महाभूतमनोभिमानमहत्प्रकृत्यावृतमब्जजादिभिः ।
सुरैः शिवेतैर्नरदैत्यसंघैर्युतं ददर्शास्य तनौ यशोदा ॥
—इति म· भा ता· निर्णये (12/115) ।

[2] स आवसत्पुष्करनालतंतूनलब्धभोगो यदिहाग्निदूतः ।
वर्षाणि साहस्रमलक्षितोऽतः स चिंतयन् ब्रह्मवधाद्विमोक्षम् ॥
—इति भागवते (6/13/15) ।

[3] परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ —इति गीतासु (4/8) ।

[4] "चिंतासंतापलेपोद्भवमृतिमुखराशेषदोषातिदूरम्" ।
— इति तत्त्वप्रकाशिका (1-1-1) ।

अकर्तुं अन्यथाकर्तुं कर्तुं[1] शक्तिश्च मत्प्रभोः ।
किं वक्तव्या स्वतंत्रस्य मुक्तामुक्तजगत्पतेः[2] ॥ २६ ॥
अतः सूत्रकृतोक्ता ये दोषाः पशुपतेस्तव ।
तेषां वार्ताऽपि चापास्ता श्रीसहाये मम प्रभौ[2] ॥ २७ ॥
अतः सपत्नीकवायुब्रह्माणौ श्रीश्च केशवे ।
शुद्धाश्च सर्वदेवेभ्योऽप्युत्तमाश्च सदाऽभवन् ॥ २८ ॥
सर्वदोषातिदूरत्वाद्धरिः सर्वोत्तमोत्तमः ।
श्रुत्या स्मृत्या च युक्त्या च सिद्धोऽभूद्धि न संशयः ॥ २९ ॥
अतः श्राव्यमिदं काव्यं वस्तुतत्त्वविवेचनात् ।
हरेश्च हरिदासानां सुराणां च मनःप्रियम् ॥ ३० ॥
श्रुतेश्च संमतं सर्वनृणां भक्तिप्रदं हरौ ।
अंते विमुक्तिदं तस्मात् कीर्तनीयं दिने दिने ॥ ३१ ॥
चरता स्थिरता यस्मात् परताऽवरता तथा ।
नरताऽमरता यस्मात् स्मरतात् स्वरतं हरिम् ॥ ३२ ॥
एवं तत्त्वपरामर्शे सत्येव श्रीपतिर्नृणाम् ।
मुक्तिदस्तन्मया सर्वं चोक्तं युक्तमिति स्थितम् ॥ ३३ ॥

---

[1] कारयितुं अकारयितुं अन्यथाकारयितुं च भगवानेव शक्तः । इति च वक्ष्यति (12/36) ।

[2] स्वतंत्रत्वात्सर्वदोषोज्झितश्च निःसीमशक्तिर्हि यतः स्वतंत्रः ।
दोषास्पृष्टौ गुणपूर्तौ च शक्तिर्निःसीमत्वाद्विद्यते तस्य यस्मात् ।
—इति म॰ भा॰ ता॰ निर्णये (22/101) ।

[3] यदधीना गुणाः सर्वे दोषा अपि हि सर्वतः ।
गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः ॥
—इति अनुव्याख्याने (2/1/38) ।

अच्युतो यो गुणैर्नित्यमेवाखिलैः
प्रच्युतोऽशेषदोषैः सदा पूर्तितः । —इति द्वादशस्तोत्रे (8/8) ।

अनेन प्रीयतां विष्णुर्मननेन महात्मनाम् ।
मनस्यस्तु स नः सर्वोत्तमो यस्तु हयाननः ॥ ३४ ॥

तमेव चार्चये नित्यं तमेव प्रार्थयेऽनिशम् ।
तमेव कीर्तये चित्ते ध्याये महितमेव हि ॥ ३५ ॥

यत्नासाध्यमिदं काव्यमयत्नेनैव यत्कृतम् ।
अतः कर्तुमकर्तुं च समर्थोऽभून्मम प्रभुः ॥ ३६ ॥

अहर्निशं हयग्रीवसेवी तत्कृपया कविः ।
महाकाव्यमिदं चक्रे वादिराजो महामतिः ॥ ३७ ॥

लक्ष्मीप्रियाय यश्चक्रे रुक्मिणीशजयं[1] पुरा ।
स चक्रे भारतीप्रीत्यै भारतीशजयं त्वमुम् ॥ ३८ ॥

श्रियः पत्युर्भियां हर्तुः त्रयीवेत्तुर्हयास्य ते ।
प्रियाय मे जयाय स्यादियं सरसभारती ॥ ३९ ॥

नमोऽस्तु पद्मनाभाय पद्माकांताय विष्णवे ।
परे तत्त्वे विशुद्धाय मध्वाय च नमो नमः ॥ ४० ॥

वादिराजकृते श्राव्ये काव्ये भव्ये सुबुद्धिभिः ।
सेव्ये सरसभारत्यां विलासोऽभूद्धरिप्रियः ॥ ४१ ॥

॥ इति श्रीमद्वादिराजतीर्थपूज्यपादविरचित सरसभारतीविलासे द्वादशो विलासः ॥

## ॥ इति श्रीवादिराजश्रीपादकृत सरसभारतीविलासः ॥

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

॥ श्रीकृष्णार्पणमस्तु ॥

— o —

[1] रुक्मिणीशविजयाख्यं महाकाव्यम् (सर्गाः 19 ; श्लोकाः 1241) ।

 श्रीवादिराजकृत मध्वपरस्तोत्राणी

# १ मुख्यप्राणाष्टकम्

भक्तिं श्रीरमणस्य पादयुगले प्रीत्या प्रदेहीश म-
च्चित्तं तत्पदपद्मचिन्तनरतं नित्यं विधेह्यच्युतम् ।
त्वत्तातं मयि सुप्रसन्नमधुना विज्ञाप्य कुर्वंजसा
स्वामिन् प्राणगणाधिनाथ दयया दासं हि मां पालय ॥ १ ॥

त्वय्युत्तिष्ठति यत्कलेवरनभूत् पातकपात्रं सुरा-
स्ता(स्था)तु नैव हि शेकुरादिपुरुषोऽप्यासीदुपेक्षारतः ।
श्वासाख्यं मनुमस्य यत्तव वशं ब्रूतेऽविगीता श्रुतिः
स त्वं प्राणगणाधिनाथ दयया दासं हि मां पालय ॥ २ ॥

येनात्मीयजनावनाय बलिना नीतः पुरोच्चाचल-
स्तीर्णः पूर्णपयोनिधिः खलहृता दृष्टा च सीताकृतिः ।
तत्ते किं कथनीयमस्ति जगति व्यक्तस्य सत्पालने
स्वामिन् रामपदाब्जभृङ्ग तदव श्रीमन्हनूमन्नमः ॥ ३ ॥

सेवाभिः परितुष्टधीः कविजनैर्गेयाभिराद्यः पुमान्
ब्रह्माणं किल भाविनं समतनोत्सन्तं भवन्तं प्रभुः ।
साम्राज्ये सति विस्मृतिर्निजजने निन्द्या हि यत्त्वादृशां
स्वामिन् रामपदाब्जभृङ्ग तदव श्रीमन्हनूमन्नमः ॥ ४ ॥

कामी येन हि कीचको विनिहतः क्रोधी च दुश्शासनः
स्तब्धो लुब्धसुयोधनश्च मणिमान् मुग्धो मदान्धो बकः ।
कृष्णेर्ष्याभिरतश्च मागधपतिः षड्वैरिवर्गात् सदा
स त्वं भीम गुणाभिराम दयया दासं हि मामुद्धर ॥ ५ ॥

दाहाद्येन विमोचितो निजजनः स त्वं भवाग्नेरव
स्वीयाध्वप्रतिबन्धकश्च निहतः किर्मीरनामा रणे ।
प्रोद्यन्मध्वमताध्वगस्य सदय प्रत्यर्थिनः सादय
स्वामिन् सोमकुलाग्रगण्य भवतः पोतं हि मां न त्यज ॥ ६ ॥

विद्वत्सिन्धुम(गृ)होदय द्विजपथप्रज्ञप्तिबीजोदय
प्रत्यर्थ्यम्बुजमुद्रण प्रियजनप्रत्यूहवर्मार्दन ।
हृल्ध्वामलकृष्ण सस्मितदयावीक्षासुधाधिष्ण्य मां
श्रीमन्मध्वमुनीन्द्रचन्द्र कुमुदस्थानीयमुद्बोधय ॥ ७ ॥

यद्वागाख्यकराः सतां सुखकरा दुर्वादिगर्वज्वराः
सद्विद्याम्बुधिपोषको यदुदयोऽविद्याम्बुधेः शोषकः ।
यः शर्वेण शिरोधृतोऽपि विशदं चक्रे मुरारेः पदं
सोऽव्याददद्भुतमध्वतारकपतिर्हार्दान्धकारच्युतिः ॥ ८ ॥

पद्यानामिदमष्टकं प्रविलसन्मध्वाकृति(तेः)स्पष्टकं
तद्दासप्रियवादिराजयतिना तद्दत्तवाग्भूतिना ।
हृद्यं यः पठतीरितं सुचरितं सः स्याद्दिशामष्टके
माद्यन्मायिमतङ्गभङ्गकरणे सिंहप्रबर्हप्रभः ॥ ९ ॥

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितं मुख्यप्राणाष्टकं सम्पूर्णम् ॥

— ○ —

## २. विभीषणहनूमत्संवादरूपवायुस्तुतिः

कस्मादस्मद्वनस्यां प्रिमचयमुदयत्पुच्छवानच्छिनस्त्वं
रक्षो वृक्षोग्रहस्तः सुबहु किमवधीः किंबलस्त्वं बताद्य ।
सिन्धुं चान्धूकरोषि प्रविशसि पृतनां निर्भयो द्विड्भटानां
चिन्तासन्तापकारी दशवदनपुरश्रीहरः को हरे त्वम् ॥ १ ॥

वायोरायोधनाग्रेसरसुभटशिरश्छित्ररत्नोपमस्य
प्रायो नायोध्यमस्य प्रियतमसुकुमारोऽहमारोहयोग्यः ।
श्रीशाङ्केशाङ्कधाम्नः कमलजवसतेश्चाहुरार्या हनूमा-
नित्याख्यां नात्ययोऽस्मत्कुलजमुनिषु वो रंहसा वांऽहसा वा ॥ २ ॥

पारावारान्तरोद्यद्द्युमणिगणसमा भाति यद्धामसीमा
धीरो नारायणोऽयं रघुकुलमनघं कर्तुमुर्व्यां विहर्तुम् ।
भूमा भूमावुदेत्याखिलकविविनुतो रामनामाऽस्ति धीमान्
सोऽयं श्रीमारुतस्य प्रियतमतनयं दासवृत्त्याऽनुशास्ति ॥ ३ ॥

रामारामां दिदृक्षोः करचरणचलद्धालर्लीलोरुवातैः
जातक्ष्माजातपातो न तु कृतिरियमल्पातिदर्पस्य मेऽलम् ।
वेगादागच्छतो मे जवभवपवनस्योदयोऽप्येनमासी-
द्धन्ताऽहं तादृशो नासुरज मम बलं राघवोऽमोघवीर्यः ॥ ४ ॥

रामाख्यामानितस्य प्रथितहरधनुर्भङ्गदोत्तुङ्गबाहोः
श्रुत्यन्तात्यन्तगीतागणितगुणगणस्येष्टसर्वेष्टदातुः ।
सोऽहं मोहान्धकारक्षपणदिनमणेर्दानवानीकिनीनां
मृत्योर्भृत्योऽस्मि तेन प्रहित इह खलानीतसीतार्तिशान्त्यै ॥ ५ ॥

पर्यग्गिर्यग्र्यगण्यं रविरथतुरगस्याग्रतो वाऽग्रयायी
विद्यां प्रद्योतनादध्यगमदुरुजवस्तन्मुखस्योन्मुखो यः ।
रामांघ्रिप्रेमशक्त्या त्रिभुवनजननस्थानसंस्थानशक्ते-
र्लङ्का शङ्कास्पदा किं निगमनुतचरित्रस्य तस्याशुऽगस्य ॥ ६ ॥

अण्डोद्दण्डोदशोषेऽप्यतिकुशलतमः क्वेदमम्भोधिमम्भो-
लोकालोकाप्तमूर्तेर्जलनिधितरणं किं महन्निर्ममस्य ।
विश्वस्य श्वासयन्तुर्मम किमु खलविध्वंसने संशयः स्या-
द्देवार्श्चैवोचुरुक्थं मम पितरमतश्वासमो दास एषः ॥ ७ ॥

धर्मं सम्मानयन्तं रघुपतिरवति प्रत्यहं शत्रुभावं
तस्मिन्योऽस्मिन्प्रदेशे रचयति तमिमं हन्ति तस्यानुगस्य ।
नित्यं कृत्यं तदेव ह्यघकरदशकण्ठोपकण्ठस्थदैत्या-
नित्थं हत्वाऽऽत्मभर्तुः प्रियकृदभवमुद्दामशौर्योऽनिवार्यः ॥ ८ ॥

द्रक्ष्यस्यक्षय्यवीर्योऽप्यरिभटपटुभिस्तैरबद्धैर्हि बद्धः
पुच्छस्वच्छाग्निनाऽहं कुनयतनयदत्तेन वित्तं समस्तम् ।
धक्ष्याम्यध्यक्षमेषां भवनवनमपि प्राज्ञ ते धाम धीमन्
त्यक्त्वा त्यक्तोग्रदैत्यप्रकृतिकृतविकारस्य धर्मानुगस्य ॥ ९ ॥

मुञ्च त्वं चाग्रजस्य प्रबलतमहरिद्वेषतो दोषभाजः
सेनामेनां विहीनां मनसि सुमनसां नायकं दायकं ते ।
भाग्यस्याग्र्यस्य नित्यं स्मर दितिजमतं धिक्कुरु न्यक्कुरुष्व
स्वीयस्याऽऽयासदात्रीं धियममलधिया धारयासुं दयालुम् ॥ १० ॥

सेतुं यातुं कपीनामुरुतरजलधौ पुण्यहेतुं प्रहातुं
पापान्यापत्कराणि प्रथितसुयशसे शर्म दातुं च गातुः ।
वत्स्यत्यस्यत्यथापि स्वकरधृतधनुर्मुक्तशाणोग्रबाण-
ज्वालाजालः स दैत्यव्यवनमवनकृद्राघवः श्लाघनीयः ॥ ११ ॥

भेत्ता मत्तासुरेन्द्रप्रतिभयशिरसां कुम्भकर्णोग्रकर्ण-
च्छेत्ता हर्ता च तस्य प्रियतमधरणीभारहारी स हारी ।
सीतामेतां समेत्य स्वचरणशरणान्देवभूदेवपूर्वान्
पृथ्वीं चेत्थं प्रतोष्य प्रविशति च निजां शर्वयोव्यामयोव्याम् ॥ १२ ॥

तृष्णा कृष्णावतारेऽप्यवशमनतदङ्घ्र्यब्जसेवोत्सवे स्या-
द्भीमो भूत्वा तदाऽहं बकमदहरणो हन्मि किर्मीरदैत्यम् ।
सत्त्वोद्रिक्तं जरायाः सुतमथ गदयोन्मृद्य सद्धैर्यवीर्यैः
शौर्योन्मत्तं च दुर्योधनमनु सबलं नाशयाम्याशयाऽन्धम् ॥ १३ ॥

ईशादेशेन सोऽहं पुनरपि धरणीं प्राप्य दुःशास्त्रशस्त्रं
मध्वाख्योऽद्धा प्रदूष्य प्रगुणमथ करिष्यामि सूत्रस्य भाष्यम् ।
कृत्वा कृत्वाऽवतारान्सुरनिकरगुरुर्मुख्यवायुर्निजायुः
सार्थीकर्तुं मुकुन्दं परिचरति सदाऽरीन्हरन्व्याहरंश्च ॥ १४ ॥

विद्यां विद्यापतेर्यः पठति हनुमतः सोऽपि विद्यां समृद्धा
मभ्येत्यभ्युन्नतिं च प्रतिदिनमुरुभक्तिं स्वयोग्यं च भाग्यम् ।
विद्वन्मध्ये प्रसिद्धिं बुधनुतकवितां वादिराजर्षिराजः
सद्यो यद्योगिवर्यो व्यतनुत तदियं सर्वकार्याणि कुर्यात् ॥ १५ ॥

॥ इति श्रीवादिराजकृत विभीषणहनूमत्संवादरूप वायुस्तुतिः ॥

— ० —

# ३. मध्वमुनिप्रतापाष्टकम्

क्वचित्सुरान्शास्ति सुराङ्गनाः क्वचित् क्वचिच्च गन्धर्वपतीनृषीन् क्वचित् ।
क्वचित्पितॄन् क्वापि नृपान्नरान्क्वचिच्छुभानयं मध्वमुनिः प्रतापवान् ॥ १ ॥

क्वचित्प्रभुं स्तौति समीक्षते क्वचित् क्वचित्स्मरन्नृत्यति गायति क्वचित् ।
क्वचित्तमाराधयतीश्वरं क्वचिन्नमत्ययं मध्वमुनिः प्रतापवान् ॥ २ ॥

क्वचिद्धरेर्जीवजडातिभिन्नतां क्वचित्प्रभोः सर्वगुणैश्च पूर्णताम् ।
क्वचिच्च तस्याखिलदोषशून्यतां वदत्ययं मध्वमुनिः प्रतापवान् ॥ ३ ॥

क्वचिच्च विष्णोरुरुचित्ररूपतां क्वचिच्च मुक्ताखिलजीवयन्तृताम् ।
क्वचिच्च तस्याव्ययचिन्मयाकृतिं व्यनक्त्ययं मध्वमुनिः प्रतापवान् ॥ ४ ॥

क्वचित्स्मृतीः क्वापि पुराणसंहिताः प्रवक्ति सूत्रं क्वचिदागमोक्तिभिः ।
क्वचिच्च धर्मं चरति क्वचिच्च तं ब्रवीत्ययं मध्वमुनिः प्रतापवान् ॥ ५ ॥

क्वचिच्च चार्वाककणादगौतमप्रभाकराद्वैतितथागतादिकैः ।
कृतं मतं युक्तिशतैर्विखण्डयन् विभात्ययं मध्वमुनिः प्रतापवान् ॥ ६ ॥

परान्पराभावयति क्वचित्क्वचिन्निजान् कथायां कुशलीकरोत्ययम् ।
क्वचिद् बुधान्वैष्णवमार्गमागतान् पुनात्ययं मध्वमुनिः प्रतापवान् ॥ ७ ॥

क्वचित्समस्तागमनिर्णयोदिताः कृतीः कृता व्याकुरुते सभान्तरे ।
प्रहृष्टरोमा नृहरौ क्वचिन्मनो युनक्त्ययं मध्वमुनिः प्रतापवान् ॥ ८ ॥

इदं प्रतापाष्टकमच्युतप्रियश्रुतिप्रतीतामलमध्वयोगिनः ।
यतिस्तदीयोऽकृत वादिराज उदारधीस्तस्य कृपाक(फ)लाप्तये ॥ ९ ॥

॥ इति श्रीमद्वादिराजपूज्यचरणविरचितं मध्वमुनिप्रतापाष्टकं सम्पूर्णम् ॥

॥ इति श्रीवादिराजश्रीपादकृत श्रीमध्वपरस्तोत्राणि ॥

— ० —

# श्रीवादिराजश्रीपादकृत मध्वपरश्लोकाः

यत्पूर्वं त्वमपूर्वसिंधुमतरः सद्वंद्य मध्वाचला-
दुद्यातः शतयोजनं परमदः शंसंति संतः क्षितौ ।
चित्रं जैत्र भवच्चरित्रमधुना यद्वेदवार्धिं तरन्
नित्यं सहस्रकोटियोजनमपि त्वं राजवद्राजसे ॥

— इति युक्तिमल्लिकायाम् (1/3) ।

स्वकोशस्थसदर्थाख्यवित्तैर्दत्तैः स एव तत् ।
विद्रावयेद्धि दारिद्र्यं दद्यान्मध्वो गतिं च मे ॥ (5,997)

—इति युक्तिमल्लिकायाम् (5,997)

त्रिधामा यस्य हृत्सीम्नि कृतधामा निरंतरम् ।
सुधीश्रियं दिशतु मे स समध्वक्षीरसागरः ॥ (1/2)

नमोऽस्तु मध्वमुनये सदा सच्छास्त्रयोनये ।
तदीयवाण्यै दुर्वादिकृपाण्यै च नमो नमः ॥ (5,93) —न्यायरत्नावल्याम् ।

सन्मुख्यगतये श्लाघ्यकृतये वीतभीतये ।
स्ववाग्मितये पूर्णमतये यतये नमः ॥ —विवरणव्रणे ।

सत्संवमानससरोवरमध्यवर्ती कृष्णांघ्रिचारुकमलार्पितचित्तवृत्तिः ।
शास्त्रातिमंजुपदरंजितरम्यसंसदास्माकहृत्सरसिजेऽस्तु स मध्वहंसः ॥
—इति रुक्मिणीशविजये (1/4)।

आजन्मभूमेरटतोऽखिलेषु तीर्थेषु तद्वर्णनभारमूढ्वा ।
आयासमस्मन्मृदुमानसस्य वायुर्मुहुः कृतंतु मध्वरूपी ॥
—इति तीर्थप्रबंधे (1/3)।

पारावराख्यरम्योपनिषदि विलसत्सेतवे सूत्रमात्रे
रामव्यासेन सेनानुगतिफलकृते दर्शिते रामभृत्यः ।
नानास्थानोपर्नीतैर्हनुमदभिनवश्रीमदानंदतीर्थः
तेनेऽस्मानाद्रिमानैस्तमिममतिदृढं रम्यमात्मीयगम्यम् ॥
—इति च तीर्थप्रबंधे (4/18)।

अतो मीमांसकाचार्यमध्वाचार्यस्य सन्निधौ ।
को वा वादी प्रतिवदेद्यद्वागीशो ह्यसौ गुरुः ॥
—इति श्रुतितत्त्वप्रकाशिकायाम् (507)

शुद्धायानादिसिद्धाय स्वाध्यायोन्नद्धवुद्धये ।
हृद्याय निरवद्याय मध्वाय च नमो नमः ॥ —इति भूगोळनिर्णये (6)।

मरुद्रूपे गुरौ प्रेम्णा हरिर्द्वारवतीपुरात् ।
नावा सेवातुरं द्रष्टुकामो दामोदरप्रभुः ॥ (7/18)

बोधयामास सुजनान् बाधयामास दुर्जनान् ।
वेदयामासं तत्त्वानि साधयामास सद्यशः ॥ (7/7)

कृष्णप्रतिष्ठां यश्चक्रे चक्रे शिष्यान् नवान् नव ।
विस्तारयामास भूमौ तत्त्वं तत्वविदग्रणीः ॥ (7/22)

स्वानुजं विष्णुतीर्थं च तपसा धूतकल्मषम् ।
प्रेषयिष्यति सत्तत्वकथनाय कलौ किल ॥ (7/26)

॥ इति सरभारतीविलासः ॥

— o —